॥ श्रीः ॥

वैदिकानुसन्धानसमितेः प्रथमं पुष्पम्.

काशीहिन्दूविश्वविद्यालयः.

# सामतन्त्रम्

## [ सामवेदीयं प्रातिशाख्यम् ]

सम्पादकः

ए. एम्. रामनाथदीक्षितः, एम्. ए.,

वेदाचार्यः, साहित्यशास्त्राचार्यः, साहित्यशिरोमणिः,

थियालॉजीविभागाध्यक्षः

संस्कृतमहाविद्यालयः, हिन्दूविश्वविद्यालयः, वाराणसी.

|| श्रीः ||

# Preface.

|| श्रीगणेशाय नमः ||

|| नमः सामवेदाय ||

अथेदानीं भाष्यभूषितं सामतन्त्रं छन्दोगप्रातिशाख्यमिदंप्रथमतया संमुद्रय प्रकाश्यते। इतः पूर्वं केवलानि सूत्राणि सामतन्त्रगतानि अक्षतन्त्र-पञ्चविधसूत्राभ्यां सह वेयारण्यकग्रन्थयोः तत्तत्सामारम्भेषु तञ्जावूर्मण्डलान्तर्गतवरहूरभिजनैः ब्रह्म-श्रीनागुश्रौतिभिः ग्रन्थाक्षरेषु प्राकाश्यन्त। तदनुसृत्य प्रपाठक-दशक सूत्रसंख्यो-ल्लेखनपूर्वकं सातारप्रदेशप्रकाशिते ग्रामेगेयगाने ब्रह्मश्रीनारायणदीक्षितैर्विदुषां मनोरञ्जनाय सूत्राणि समपादिषत। परमुभयतोऽप्यर्थावगमो दुर्लभ एवासीदिति मन्यमानैः काशीहिन्दुविश्वविद्यालयीयवेदगवेषणाविभागसदस्यैस्सभाष्यसामतन्त्र-सम्पादने प्रचोदितोऽहमधस्तान्निर्दिष्टानां मातृकाग्रन्थानां साहाय्येन यथामति संशोध्य प्रकाशनार्थं सज्जीकृतवानमुं ग्रन्थम्।

आदर्शग्रन्थाः—

१. मद्रासप्रान्तीय-उत्तरार्काडुजिलान्तर्गत-मुलण्डूग्रामहारवास्तव्यानां ब्रह्मश्री-वाजपेय-याजि-रामनाथदीक्षितानां तालपत्रात्मको ग्रन्थाक्षरोल्लिखितः संपूर्णः, प्रायो दोष-वर्जितः, यत्रत्याः पाठाः "क" चिह्नेन निर्दिष्टाः।

२. मद्रासप्रान्त-तञ्जापुरजिलान्तर्गतरघुनाथपुरवास्तव्यैः ब्रह्मश्रीसन्तानश्रौतिमहोदयै-र्देवनागरलिप्यां प्रतिलिपीकृत्य सम्प्रेषितः सम्पूर्णः पत्रात्मकः, यत्रत्याः पाठाः "ख" चिह्निताः। अयमपि ग्रन्थः प्रायश्शुद्धः।

३ बड़ोदाराजकीयप्राचीनग्रन्थागाराध्यक्षैः संप्रेषित आन्ध्रलिप्या भूषितः पत्रात्मकः। यस्य संख्या Acc. No. 7814. 122. त्रयोदशप्रपाठकपर्यन्तः; मध्ये मध्ये समुचितानां वर्णानां लेखनकालेऽज्ञानेन तत्तद्वर्णलेखनाय रिक्तीकृतप्रदेशः, बहुश्र स्वरचिह्नैरलङ्कृतः, यदवलोक्य बहवः सन्देहा विलयं गताः; यत्रत्याः पाठाः "ग" चिह्नेन संज्ञिताः।

४. तैरेव पुस्तकालयाध्यक्षैः संप्रेषितस्तालपत्रात्मको ग्रन्थाक्षरोद्भासितः। तत्र पुरस्ता-त्कानिचन पत्राणि जीर्णानीति कृत्वा द्वितीयप्रपाठकप्रभृत्येव पाठान्तरार्थमुपयुक्तः।

लेखकप्रमादपरिपूर्णः (क्वचिद्भाष्याणामदर्शनं क्वचित्सूत्राणामनुल्लेखनं क्वचिदुदाहरणानां परित्याग इत्येवमादि दोषदूषितः) चतुर्दशप्रपाठकपरिमितः। ततः परं पत्राणि जीर्णानि। यत्रत्याः पाठाः "घ" संज्ञया चिह्निताः।

५. पञ्चमस्तु ग्रन्थो मदीयः। यत्र च केवलं पञ्च प्रपाठका वर्तन्ते। अष्टमप्रपाठकप्रभृति समाप्तिपर्यन्तं सामतन्त्रप्रकाशिकोपेतं सामतन्त्रं ब्रह्मश्री तञ्चम्पेट्ट अरुणाचल श्रौतिभिः सम्प्रेषितम्। तत्रत्याः पाठाः 'ङ' संज्ञया चिह्निताः।

६. मूलमात्रं पुना ओरियण्टल इन्स्टिट्यूटभवनतः प्राप्तम्। अत्र समाप्तौ लेखनकालः लेखकनाम चैवं वर्तते—संवत् १७०१९ ( १७१९ ? ) वर्षे माघमासे पौर्णमास्यां भौमवारे त्रसूर जितसुत माधवजी लिखितम् सर्वसूत्र १३११ इति।

No. 101 Samvat 1719. New. No. Cup 35
of. 1879-80. Sector
Extent foll. 12, lines 9
letters 22. described
Vol. Part No इति।
II. I 3

अत्र चैकैकस्य प्रपाठकस्य समाप्तौ तत्रत्यसंकलितसूत्रसंख्यापि निर्दिष्टा। तद्यथा-१०८, ९८, ८७, १०३, १००, १०६, १०६, ९८, ८६, १००, १०३, ८८, ११८, सर्वासां संकलने १३०१ आयाति। परं ग्रन्थसमाप्तौ सर्वसूत्र १३११ इति लिखितम्। दश सूत्राणि त्यक्तानि।

अत्र "ग" पुस्तकं विना सर्वेषु भाष्यग्रन्थेषु आद्यन्तयोः सूत्राणि समुपलभ्यन्ते— यथावा अन्त्ये ॥ २ ॥ अन्त्ये नीचे भरतः। तामभिना। पुष्यं। आओहोइ। अन्त्ये ॥ २ ॥ इति। इयं रीतिर्महाभाष्येऽवलोक्यते। यथा—रक्षोहागमलघ्वसंदेहाः प्रयोजनमिति वार्तिकं व्याचिख्यासन्भगवान्पतञ्जलिर्भाष्यकारः "रक्षा" इति सूत्रभागमवयुत्य रक्षार्थमध्येतव्यं व्याकरणमिति सम्भाष्य समाप्तौ रक्षापदं पुनरुपादत्ते स्म। एवं "वृद्धिरादैजि"त्यादि सूत्रभाष्यावलोकयितॄणां स्पष्टमेव। सैव रीतिरत्रापि दरीदृश्यत इति मयापि तथैव सूत्रसन्निवेशोऽकारि।

तस्यैतस्य ग्रन्थस्य 'सामतन्त्रव्याकरणम्, छन्दोगव्याकरणम्' इति तत्र तत्र नामोल्लेखः कृतः। परमध्येतृसम्प्रदाये प्रातिशाख्यमित्येवायं व्यवह्रियते। ऋग्यजुरथर्व-

वेदेषु प्रातिशाख्यग्रन्थाः पूर्वमेव निस्सृताः। सामवेदेऽपि ऋक्तन्त्रम्, अक्षरतन्त्रम्, पुष्पसूत्रमिति प्रातिशाख्यत्रयं प्रकाशितम्। सामतन्त्रं तु तेषु सर्वेषु प्रधानं प्रातिशाख्यम्। तदत्रोदाहृतानामुदाहरणानां स्थलनिर्देशं पृथगेव कोष्ठेषु निरदिशम्। तत्रारण्यकगानोदाहरणानां तथा साम्नां च स्थलनिर्देशनावसरे "आ" इति पुरस्तासंकेतमकरवम्। यतो हि वेयगाने १७ प्रपाठकाः प्रथमसंख्यामारभ्य सप्तदशसंख्यापर्यन्तं निदिष्टाः, पुनश्चारण्यकगतानां षण्णां प्रपाठकानां प्रथमसंख्यामारभ्य संख्यानिदिष्टा गानग्रन्थयोः। तत्र पाठकानां सन्देहो मा भवत्विति आरण्यकसूचनार्थम् "आ" इति निर्देशः कृतः। तत्र प्रथमा संख्या प्रपाठकम्, द्वितीया अर्धम्, तृतीया साम च निदिशन्ति। तद्यथा सुतꣳराधा-( ५-१-१० ) पञ्चमप्रपाठकस्य प्रथमेऽर्द्धे दशमे साम्नीदं पर्व वर्तत इति सुधियो विभावयन्तु। कुत्रचित् ऋक्पदान्येव गृहीतानि भाष्ये, तद्यथा-ऊतीसदा, ऋजीषी एवमादि। तत्र च पूर्वाचिकगतां संख्यां कोष्ठे समसूचयम्। साम्नामुपरि च स्वरसङ्केतं यथावदकरवम्। ऋक्पदेषु भ्रमो माभवत्विति स्वरसङ्केतं नाकरवम्।

अन्ते च सूत्रसूची, भाष्ये समुद्धृतानां साम्नां सूचीति सूचीद्वयं सन्निवेशितम्। ऋक्पदानां गानप्रकारोऽपि ग्रन्थान्तेऽनुबन्धरूपेण संयोजनीय इति मतिरासीत् परं कालविलम्बो महान्भवतीति धिया संत्यक्तः। द्वितीयभागे लघ्व्या टिप्पण्या सहाचिरादेव मुद्रापयिष्यामि। तत्र च सूत्रपदसूच्यपि विशिष्टं स्थानं लप्स्यते। अयं च ग्रन्थः ३१-१-५८ एव समये मुद्रणार्थमारब्धः शनैश्शनैः श्रीमदन्नपूर्णाजानेः कृपयाद्य सम्पूर्णः।

## धन्यवादाः

अपूर्वस्य सामतन्त्रस्य सभाष्यस्य संशोधनकर्मणि मां नियोजितवद्भ्यः काशीहिन्दूविश्वविद्यालयीयवैदिकानुसन्धानसमितिसदस्येभ्यो हार्दिकान्धन्यवादानाविष्करोमि। तदानीन्तनसमितिसंयोजकेभ्यो वेदान्तविशारद-पण्डितराजेत्यनेकविधोपाध्यलङ्कृतेभ्यो ब्रह्मश्री पं० ति-वे. रामचन्द्रदीक्षितमहोदयेभ्यः, यैः पूनाबडोदाप्राच्यपुस्तकागारेभ्यो मातृकाग्रन्थानानाय्य महानुत्साहः प्रदत्तः, तेभ्यः किञ्चिदुपहर्तुमक्षमस्तेषां पादारविन्दयोर्हृदयाम्बुजमेव सविनयं समर्पयामि।

लेखकप्रमादपरिपूर्ण (कचिद्भाष्याणामदर्शनं कचित्सूत्राणामनुल्लेखनं कचिदुदाहरणाना परित्याग इत्येवमादि दोषदूषितः) चतुर्दशप्रपाठकपरिमितः। ततः पर पत्राणि जीर्णानि। यत्रत्या पाठा• "घ" सज्ञया चिह्निताः।

५. पञ्चमस्तु ग्रन्थो मदीय। यत्र च केवल पञ्च प्रपाठका वर्तन्ते। अष्टमप्रपाठक प्रभृति समाप्तिपर्यन्त सामतन्त्रप्रकाशिकोपेत सामतन्त्र ब्रह्मश्री तत्त्वम्पट्ट अरुणाचल श्रौतिभिः सम्प्रेषितम्। तत्रत्याः पाठा 'ङ' सज्ञया चिह्निताः।

६. मूलमात्रं पुना ओरियण्टल इन्स्टिट्यूटभवनतः प्राप्तम्। अत्र समाप्तौ लेखनकालः लेखकनाम चैवं वर्तते—संवत् १७०१९ (१७१९?) वर्षे माघमासे पौर्णमास्या भौमवारे त्रसूर जितसुत माधवजी लिखितम् सर्वसूत्र १३११ इति।

No 101 Samvat 1719 New. No. Cup 35
of. 1879 80 Sector
Extent foll 12, lines 9
letters 22. described
Vol Part No इति।
II. I 3

अत्र चैकैकस्य प्रपाठकस्य समाप्तौ तत्रत्यसकलितसूत्रसंख्यापि निर्दिष्टा। तद्यथा-१०८, ९८, ८७, १०३, १००, १०६, १०६, ९८, ८६, १००, १०३, ८८, ११८, सर्वासा सकलने १३०१ आयाति। पर ग्रन्थसमाप्तौ सर्वसूत्र १३११ इति लिखितम्। दश सूत्राणि त्यक्तानि।

अत्र "ग" पुस्तक विना सर्वेषु भाष्यग्रन्थेषु आद्यन्तयो सूत्राणि समुपलभ्यन्ते—यथावा अन्त्ये ॥ २ ॥ अन्त्ये नीचे भवत। तामश्विना। पुष्यं। आऔहोइ। अन्त्ये ॥ ७ ॥ इति। इयं रीतिर्महाभाष्येऽप्यवलोक्यते। यथा—रक्षोहागमलघ्वसदेहाः प्रयोजनमिति वार्तिक व्याचिख्यासुर्भगवान्पतञ्जलिर्भाष्यकारः "रक्षा" इति सूत्र भागमवयुत्य रक्षार्थमध्येतव्य व्याकरणमिति सम्भाष्य समाप्तौ रक्षापदं पुनरुपादत्ते स्म। एव "वृद्धिरादैजि" त्यादि सूत्रभाष्यावलोकयितॄणा स्पष्टमेव। सैव रीतिरत्रापि दरीदृश्यत इति मयापि तथैव सूत्रसन्निवेशोऽकारि।

तस्यैतस्य ग्रन्थस्य 'सामतन्त्रव्याकरणम्, छन्दोगव्याकरणम्' इति तत्र तत्र नामोल्लेखः कृतः। परमध्येतृसम्प्रदाये प्रातिशाख्यमित्येवाय व्यवह्रियते। ऋग्यजुरथर्व

वेदेषु प्रातिशाख्यग्रन्था पूर्वमेव निस्सृताः। सामवेदेऽपि ऋक्तन्त्रम्, अक्षरतन्त्रम्, पुष्पसूत्रमिति प्रातिशाख्यत्रयं प्रकाशितम्। सामतन्त्रं तु तेषु सर्वेषु प्रधानं प्रातिशाख्यम्। तदत्रोदाहृतानामुदाहरणानां स्थलनिर्देशः पृथगेव कोष्ठेषु निरदिक्षम्। तत्रारण्यकगानोदाहरणानां तथा साम्नां च स्थलनिर्देशनावसरे "आ" इति पुरस्तात् संकेतमकरवम्। यतो हि वेयगाने १७ प्रपाठकाः प्रथमसंख्यामारभ्य सप्तदशसंख्यापर्यन्तं निर्दिष्टाः, पुनरप्यारण्यकगतानां षण्णां प्रपाठकानां प्रथमसंख्यामारभ्य संख्या निर्दिष्टा गानग्रन्थयोः। तत्र पाठकानां सन्देहो मा भवत्विति आरण्यकसूचनार्थम् "आ" इति निर्देशः कृतः। तत्र प्रथमा संख्या प्रपाठकम्, द्वितीया अर्धम्, तृतीया साम च निर्दिशन्ति। तद्यथा सूतं१२राधा१२ (५ १ १०) पञ्चमप्रपाठकस्य प्रथमेऽर्द्धे दशमे साम्नीदं पदं वर्तत इति सुधियो विभावयन्तु। कुत्रचित् ऋक्पदान्येव गृहीतानि भाष्ये, तद्यथा ऊर्लीसदा, ऋजीषी एवमादि। तत्र च पूर्वार्चिकगता संख्या कोष्ठे समसूचयम्। साम्नामुपरि च स्वरसङ्केतं यथावदकरवम्। ऋक्पदेषु भ्रमो माभवत्विति स्वरसङ्केतं नाकरवम्।

अन्ते च सूत्रसूची, भाष्ये समुद्धृतानां साम्नां सूचीति सूचीद्वयं सन्निवेशितम्। ऋक्पदानां गानप्रकारोऽपि ग्रन्थान्तेऽनुबन्धरूपेण संयोजनीय इति मतिरासीत् परं कालविलम्बो महान्भवतीति धिया सत्यक्तः। द्वितीयभागे लघ्व्या टिप्पण्या सहाचिरादेव मुद्रापयिष्यामि। तत्र च सूत्रपदसूच्यपि विशिष्टं स्थानं लप्स्यते। अयं च ग्रन्थः ३१ १ ५८ एव समये मुद्रणार्थमारब्धः शनैश्शनैः श्रीमदन्नपूर्णाजानेः कृपयाद्य सम्पूर्णः।

## धन्यवादाः

अपूर्वस्य सामतन्त्रस्य सभाष्यस्य संशोधनकर्मणि मां नियोजितवद्भ्यः काशीहिन्दूविश्वविद्यालयीयवैदिकानुसन्धानसमितिसदस्येभ्यो हार्दिकान्धन्यवादानाविष्करोमि। तदानींतनसमितिसंयोजकेभ्यो वेदान्तविशारद पण्डितराजेत्यनेकविधोपाध्यलङ्कृतेभ्यो महाश्री पं० ति-वे. रामचन्द्रदीक्षितमहोदयेभ्यः, यैः पूनामद्रोदाप्राच्यपुस्तकागारेभ्यो मातृकाग्रन्थानानाय्य महानुत्साहः प्रदत्तः, तेभ्यः किञ्चिदुपहर्तुमक्षमस्तेषां पादारविन्दयोर्हृदयाम्बुजमेव सविनयं समर्पयामि।

येऽत्र मय्यनुकम्पापराः स्वीयान्मन्थान्यावन्मुद्रणसमाप्ति मदन्तिकेऽवास्थापयन्, तान् ब्रह्मश्रीरामनाथदीक्षितान् वाजपेययाजिनः, ब्रह्मश्रीसन्तानश्रौतिमहोदयान्, बडोदा-पूनाप्राच्यपुस्तकालयाध्यक्षान् , तञ्चम्पट्टनब्रह्मश्री-अरुणाचलदीक्षितमहोदयान् सर्वथा विस्मर्तुमनीशानो यथावद्धन्यवादैरापूरयामि कृतज्ञताप्रदर्शनपूर्वकम् ।

ग्रन्थरत्नस्यास्यामलेखलेशनेन मामकीनमुत्साहं समेधयितृभ्यः काशीहिन्दू-विश्वविद्यालयीय भारतीमहाविद्यालये आर्ट एण्ड आर्किटेक्चरविभागाध्यक्षेभ्यो निरन्तर-प्राचीनसुरभारतीग्रन्थानुसन्धानतत्परेभ्यः एम्. ए., पी. एच्. डी., डी. लिट् उपाधि-भूषितेभ्यो डाक्टर वासुदेवशरण अग्रवाल महोदयेभ्यः कृतज्ञताप्रकाशनपूर्वकं शतशो धन्यवादान्वितनोमि ॥

निर्दिष्टसमये मुद्रणकार्यं समाप्य मदुत्साहं समेधितवतां हितचिन्तकमुद्रणा-लयाध्यक्षाणां श्रीकेशवकृष्णरावगीमहोदयानां कार्यभारं प्रशंसन्नितोऽपि समुन्नतिं श्रीकाशीपुराधीशादाशंसे ।

नितान्तं जागरूकेण चेतसा कृतेऽप्यस्मिन्संशोधनकर्मणि ये दोषास्समापतिता भ्रमप्रमादादिभिस्तान् गुणैकपक्षपातिनो विद्वांसः क्षाम्यन्तु, अनुगृह्णन्तु च मामाशीः प्रदानेनेत्यभ्यर्थये ।

संस्कृतमहाविद्यालयः<br>काशीहिन्दूविश्वविद्यालयः,<br>वाराणसी<br>विजयादशमी, वै. सं. २०१८<br>१९.१०.१९६१

सुधीजनविधेयः—<br>ए. एम्. रामनाथदीक्षितः ।

## Preface

Pt. Rsmanath Dikhshit, Head of the Department of Theology in the Sanskrit Mahavidyalaya of the Banaras Hindu University, is an *erudite scholar who* has learned the Saman chants and their intricacies from the traditional scholars in South India. The present edition of the Sāmatantra with an ancient commentary is a welcome addition to the existing literature of the Sāmaveda Prātiśākhyas.

Fortunately the literary remains of Sāmaveda literature are extensive in comparison to those of the other Vedas. At one time numerous Saṁhitās of the Sāmaveda were known—according to Patañjali their number was one thousand. Factually only three of them have survived upto our own times, viz., the Saṁhitā of the Rāṇāyanīyas (edited by J. Stevenson, 1842), that of the Kauthumas (edited by H. Benfey, 1848, and by Satyavrata Sāmaśramin, 1871), and that of the Jaiminīyas (edited by W. Caland, 1907). Of these the best known is the Samhitā of the Kauthumas which has been so often printed in the Indian editions. Besides, the Schools of the followers of Sātyamugri, Naigi, and Gautama were also once known.

The Brāhmana literature produced under the aegis of the Sāmaveda Charanas was not less extensive and varied. Of the same we still have the following: 1. Tāndya Mahābrāhmana, 2. Shadvimśa Brāhmana, 3. Sāmavidhāna Brāhmana, 4. Ārsheya Brāhmana, 5. Daivata Brāhmana, 6. Saṁhitopanishad Brāhmana, 7 Mantra Brāhmana, 8. Vaṁśa Brāhmana, 9. Jaiminīya Upanishad Brāhmana, 10. Jaiminīya Brāhmana.

But the Vedic schools called Charanas had a very dynamic institution in the form of Academies called Parishad in which both the teachers and their advanced students participated for discussing textual and exegetical problems and carried on lively exchanges about the various accents of recitation and chanting melodies as well as grammatical questions relating to euphony, vowel elongation or cerebralisation, etc. The discussions of the Parishads were accorded considerable weight by the adherents of those schools and in course of time came to be embodied as Pārshada literature. These texts were specifically known as Prātiśakhyas.

For Sāmaveda four such texts are still available, viz, Pushpasūtra, Ṛiktantra, Sāmatantra, and Akaharatantra. The Pushpasūtra consists of ten Prapāthakas and is said to have been written by Pushpāchārya It deals with the nature of such Sāmans as Mādhyandina Pavamāna, etc. called the Uttaragāna of the Sāmaveda. It has been commented upon by several scholars, and the edition of Richard Simon with a German translation is best known. There is a Bhāshya on it by one Ajātaśatru, edited by Shri lakshmana Shatri Dravid. Pt. Ram Krishna Dikshit ,wrote another commentary called Phulladīpa. The Vedic Research Committee of the Hindu University also contemplates a new revised edition in the near future.

The Ṛiktantra deals with grammatical problems relating to euphony, cerebralisation ( shatva-natva ), elongation, elision, etc. of letters in the stanzas which had been adapted for recitation and chanting. Truly speaking it is more of a Vyākarana than a Prātiśākhya. It comprises five Pra pāṭhakas

and 286 Sūtras, and was first edited by Dr. Burnell ( Mangalore, 1879 ), and a second time by Dr. Surya Kanta Shastri ( Lahore, 1933 ) with exhaustive notes and a commentary called Ṛiktantravivṛiti. Dr Surya Kanta following the evidence of colophons in manuscripts and the ancient tradition accepted Āchārya Audavraji as the author of the Ṛiktantra. It was undoubtedly an ancient treatise and some of the sūtras in the Ṛiktantra and in Pāṇini's Ashtādhyāyī are similarly worded and deal with identical topics

The Aksharatantra consists of only two Prapāṭhakas and is a kind of supplementary text to the Sāmatantra, being some times mentioned as the fourteenth and the fifteenth Prapāthaka of the latter text. Its main topic is the treatment of Stobhas, also called akshara, whence the name of the treatise. The Stobhas are the extensions of syllables, repetitions and interpolations of syllables or even of whole words, as Hoyi, Hova, Hau, Hoi, Hai, Oi, Āi, etc. which were like huzzas or shouts of joy added to the simple richas in order to convert them into songs for singing ( sama-gāna ); e.g. in the following mantra :

I त्वमग्ने पुष्करादध्यथर्वा निरमन्थत ।

मूर्ध्नो विश्वस्य वाघतः

( Ṛigveda VI. 16.13 )

१ २ ३ १ २ ३ १ २र ३ १ २

II त्वामग्ने पुष्करादध्यथर्वा निरमन्थत ।

३ १ २र ३ १ २

मूर्ध्नो विश्वस्य वाघतः

( Sāmaveda, Pūrvārchika, Āgneyakānda,

Prapathaka 1. Daśati 1. Mantra 9 )

२र २र ५र १२र १ अ २ २

III त्वामग्नेपूष्काऽ६राद्घी। आथर्वा। नाइः। अमाऽरन्थाऽ२३४ता।

२ ५ १ २ ४ ५ ४ ५

मूऽ२३४र्न्नो। वाऽ२३४इस्वा। स्यवोवा। धाऽ५तोऽ६हाइ ॥

[ ग्रामेगेयगान, १.१.१८ ॥ Satvaleker's edition, p. 8 ]

What has been said above with respect to the subject-matter of the Aksharatantra holds good also to that of the Sāmatantra Prātiśākhya which is par excellence a comprehensive work on the conversion of Sāman stanzas into Sāman songs by the devices of Svaras, Stobhas and other grammatical operations, all of which are illustrated in detail in the Bhāshya, published here for the first time with the text. It is said that a commentary named Sāmatantra-prakāśikā by Mahāganapati also exists explaining both the Sūtras and the Bhāshya but in an incomplete manuscript.

The Samatantra seems to follow the Kauthuma Śākhā, since all the examples quoted in the Bhāshya are traceable to this particular recension, except in a solitary case. The examples in the Bhāshya show much greater familiarity with the Veya-gāna or Grāmegeya-gāna than the Āranya-gāna. The author of the Sāmatantra, according to a statement in the Sāmaveda-sarvānukramanī, was Audavraji, and happily this is the name that also occurs in many of the colophons to the Mss. There is close affinity between the Ṛiktantra and the Sāmatantra in the matter of common technical terms (Paribhāshās) which are not explained by either. Possibly they had a common Prātiśakhya tradition before them which belonged to an important branch of the Sāmaveda and to the

Pārshada lucubrations to which both treatises were deeply indebted. Dr. Surya Katna even suggested some relationship between Śākaṭāyana, author of the Ṛiktantra, and Audavraji, author of the Sāmatantra, surmising the possibility of the former being the pupil of the latter.

The Sāmaveda Saṁhitā as at present available in the Kauthuma recension comprises 1810 mantras, or barring repetitions only 1549, of which all excepting 75 occur in the Ṛigveda. Therefore the main purpose of this and of the Udgatṛi priest handling it in the ritual was to sing the verses as so many chants or melodies spun out of the metrical verses which were on that account known as the Yoni-Mantras. The present *Saṁhitā text consists only of the* Yoni Mantras and the melodies or song-books have been handed down separately. It was possible that one basic verse was chanted in more than one melody, of which the number at one time is said to have been quite considerable. As it is, the first part of tha Sāma–Saṁhitā is called Pūrvārchika or simply Ārchika, i. e., the collection of Ṛiks of which the number is 585. The number of chants based on them is 1198 as published in Satvalekar's edition. They are called the *Veyagana or Grāmageya-gāna*, and the chants are dedicated to the eulogy of the three gods, viz, Agni, Indra and Pavamāna Soma, the three divisions being respectively called the Āgneya Parva, Aindra Parva and Pāvamāna Parva. As the name Grāmageya or Grāmegeya suggests these chants were intended to be sung in villages or homes.

At the end of the Pūrvārchika is a small Parva called

Aranyakanda comprising 55 mantras, and another called Mahānāmnı Ārchika of 10 mantras. On these were based the Āranyageya-gāna, i. e., chants sung in the forest.

The concluding portion is called the Uttarārchika containing 1225 stanzas. Three of such stanzas formed a Pragātha or Triplet to be sung by the Udgātā priest in the Yajñas. The melodies of the Uttarārchika were known as Ūhyagāna and Ūhagana. 'On the whole the first verse of the triplet occurs in the Pūrvārchika, which indicates that the melody, which belongs to this verse, is to be applied to the whole triplet. For example, the first verse of the triplet in the Uttarārchika (1 1. 1. 2.32) beginning "kayā naśchitra ā bhuvadūtī" occurs in the Pūrvārchika (2. 2. 3 5 169). According to the Grāmegeyagāna this ṛich is sung to the Vāmadevya Sāman. On this melody then, the three verses of the Uttarārchika (32-34) must be chanted at the sacrifice (Dr Surya Kant, Ṛiktantra, Intro pp.20-21). The Ūhyaganas were based on the stanzas and melodies of the Āranyegeya-gāna and the Ūhagana on those of the Grāmegeyagana (ऊह्यगीतौ ग्रामेगेयवत् । ऊह्यगान आरण्यगेयवत्).

In the printed texts of the Sāmaveda Saṁhitā the accents are indicated by the numerals 1,2,3. Of these 1 stands for Udātta, 2 for Svarita and 3 for Anudātta accent. These are the same accents as found in the Ṛigveda, only marked differently. The latter half of Svarita is sometimes called Prachaya, the first half being known as the Svarita proper.

But the markings on the Saman songs are according to the musical notes, being indicated as 1, 2, 3, 4, 5, 6, 7. In most of the mantras the melodies are chanted by *five notes*

only, and therefore the numerals 6, 7 occur in only a few of them. The seven notes of the Sāman songs correspond to those of music as follows:

1. प्रथम— मध्यम । म ।
2. द्वितीय—गान्धार । ग ।
3. तृतीय—ऋषभ । रे ।
4. चतुर्थ—षड्ज । सा ।
5. पञ्चम—निषाद । नि ।
6. षष्ठ— धैवत । ध ।
7. सप्तम—पञ्चम । प ।

The initial note of the chant was the fifth and called Atikrushṭa. Thus the primary purpose of the Sama stanzas brought together in the Samhitā either singly or in triplets was to use them as the Yonis of particular melodies or songs for singing in assemblies or at the time of sacrifices. Their tunes contribute an important chapter to the history of Indian music. The function of the deliberations in the Parishads of the schools of the Sāmaveda was more or less to settle the form of the stanzas when converted into Chants, and incidentally also to discuss the grammatical operations. This dual purpose is evident also in the Sūtras of the Samatantra. It is quite a comprehensive treatise containing 1311 sūtras, i. e., about one-third of the extent of Panini's Ashṭadhyāyī

The present edition by Pandit Shri Ramanath Dikshit is a very welcome addition to the existing Samavedic literature. The sūtras had once been printed in Grantha script long ago from Tanjore in an edition of the Sāma-songs, but without any comment or explanation The Devanāgarī text of all the thirteen Prapāṭhakas together with an old Bhāshya by

an unnamed author makes this important treatise so accessible to scholars and students of the Sāmaveda. The Editor has taken great pains in the preparation of a critical text on the basis of six manuscripts collected from Madars, Baroda, Poona, etc. All lovers of Vedic literature will feel grateful to Pandit Shri Ramauath Dikshit for devoting himself to this task.

Banaras Hindu University
27. 9. 61.

V. S. Agrawala,
M. A., Ph. D., D. Litt.,
Head of the Dept. of Art and Architecture, College of Indology,
Banaras Hindu Univrsity.

# विषय-सूची

# भूमिकाविषयसूची

# भूमिकायां संक्षिप्तचिह्नज्ञेयानि नामानि

अ. त. — अक्षरतन्त्रम् ( कलिकाता )

ऋ. त. — ऋक्तन्त्रम् ( पञ्जाबविश्वविद्यालयः )

ऋ. भा. भू. — ऋग्वेदभाष्यभूमिका ( चौखम्बा प्रेस, काशी )

गो. गृ. क. — गोभिलगृह्यकर्मप्रकाशिका

जै. सू. — जैमिनीयसूत्रम् ( पूना )

तै. उ. — तैत्तिरीयोपनिषत् ( „ )

तै. प्रा. — तैत्तिरीयप्रातिशाख्यम् ( मैसूर )

ना. शि. — नारदशिक्षा ( चौखम्बा, काशी )

नि. सू. — निदानसूत्रम् ( पञ्जाबविश्वविद्यालयः )

पा. शि. — पाणिनिशिक्षा

बृ. दे. — बृहद्देवता

या. स्मृ. — याज्ञवल्क्यस्मृतिः ( निर्णयसागर प्रेस, मुम्बई )

शु. य. प्रा. — शुक्लयजुर्वेदप्रातिशाख्यम् ( मद्रास )

स. र. — सङ्गीतरत्नाकरः ( पूना )

सा. त. — सामतन्त्रम्

सा.वि.ब्रा. — सामविधानब्राह्मणम् ( कलिकाता )

सा. स. — सामवेदसर्वानुक्रमणी

स्तो. — स्तोभानुसंहारः



॥ श्रीः ॥

## Introduction

श्रीमहागणपतये नमः ॥

नमः सामवेदाय ॥

भारतीयानां सुदृढो विश्वासोऽयं यत् त्रय्याः यथावदुच्चारणं महतेऽभ्युदयाय, मात्रयापि स्वरभेदकरणं वर्णानामयथोच्चारणं चानर्थाय कल्पत इति। स्वरभेदादर्थभेदो भवन्न समीहितं फलं प्रयच्छति। तथाहि—अस्ति "वेदः" इति पदमाद्युदात्तम्, अन्तोदात्तं च, वेदः, वेदः इति। आद्युदात्तं पदं श्रुतिम्, अन्तोदात्तं पदं दर्शपूर्णमासादीष्टिप्रयुक्तं दर्भमुष्टिविशेषं चाभिधत्ते। यत्र श्रुतिः प्रतिपादनीया तत्रान्तोदात्तता वेदशब्दस्य यदि क्रियते तदा वाक्यस्थपदानामनन्वयः, अननुभावकत्वं वा स्यात्। ततश्च यथावदुच्चारणमेव साधु। एवमादीनि बहूनि पदानि वेदेषु समुपलभ्यन्ते। एवं दन्त्यतालव्ययोर्विपर्यासे विपरीतार्थप्रतीतिर्भवति। तथा प्रयुक्तो मन्त्रो यजमानं हिनस्तीति शिक्षाविदस्समामनन्ति—

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।

स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुस्स्वरतोऽपराधात्।[1] इति। भविष्यति काले मन्दप्रज्ञानां मनुष्याणां हिताय वेदसंरक्षणाय च परमकारुणिका महर्षयस्साक्षात्कृतधर्माणः कांश्चन ग्रन्थान्व्यमान्सुः, येषां "शिक्षा" इति संज्ञा लौकिकैः कृता। शिक्षायां हि वर्णानामुच्चारणप्रकारस्सम्प्रदर्शितः। अस्ति शिक्षावल्ली नाम काचनोपनिषत्तैत्तिरीयशाखायाम्। तत्रैवं शिक्षायां प्रतिपाद्योऽर्थो विवृतः—

---

1. पा. शि. ५२

[1]शीक्षां व्याख्यास्यामः । वर्णस्स्वरः । मात्रा बलम् । साम सन्तानः । इत्युक्तः शीक्षाध्यायः । इति ।

अस्याः श्रुतेरयमर्थः—वर्णाद्युच्चारणलक्षणं शिक्ष्यतेऽनयेति शिक्षा । तां शिक्षाम् । दीर्घः छान्दसः । निस्पष्टमासमन्तात् व्याख्यास्यामः प्रतिपादयिष्यामः । वर्णः अकारादयोऽचो हलश्च । स्वरः अचो धर्मः, उदात्तानुदात्तस्वरितादिः[2] । मात्रा-अलो धर्मःव्यञ्जनमर्धमात्रम् । अत्र ह्रस्व एकमात्रः दीर्घो द्विमात्रः प्लुतो वृद्धं वा त्रिमात्रः । बलं बाह्याभ्यन्तररूपः प्रयत्नविशेषः । साम अक्षराणां मध्यमवृत्त्योच्चारणम् । एतेन "गीतीशीघ्री" इत्यादीनां पाठकदोषाणामभावोऽपि सङ्गृहीतः । प्रयोगकालेऽध्ययनकाले वा परस्परं पदानां सन्धिरूपः सन्तानः । अन्ते च "इत्युक्तः शीक्षाध्यायः" इत्युपसंहारः । अत्र ऋग्वेदभाष्योपोद्घाते सायणः—[3]अत्र सन्तानस्तु व्याकरणे बहुधा विचारित इति पाणिन्यादिशिक्षास्वपेक्षित इति व्याजहार । परं प्रातिशाख्यग्रन्थेषु सर्वेऽप्यमी विषया एकैकशः सम्यग्विचारिताः । ततः प्रातिशाख्यं शिक्षा भवितुमर्हतीति निश्चिनोमि ।

अपरे पुनः—

[4]प्रतिपदं चानुपदं छन्दोभाषामथान्वितम् ।
मीमांसान्यायतर्काश्च उपाङ्गानि विदुर्बुधाः ॥

इति त्रिभाष्यरत्नाकरवाक्यं प्रमाणयन्त उपाङ्गेषु गणनां प्रातिशाख्यस्य कुर्वन्ति । यदि वैदिकं शिक्षालक्षणं समग्रं समन्वेति प्रातिशाख्ये तर्हि कः

---

1. तै उ १.२

2 यद्यप्युदात्तादयस्त्रय एव स्वरा सर्वत्र प्रतिपादिता· प्रसिद्धाश्च ऋग्यजुषोर्मन्त्रयोर्वर्तन्ते तथापि गीतिरूपस्य मन्त्रस्य नेमे धर्मा; अपि [illegible] क्रुष्टत्वादय । ते चोपरिष्टात्प्रतिपाद्यन्ते ।

3. ऋ भा. भू पृ० ४०   4 तै. भा Page ५२९

सङ्कोचस्तस्य शिक्षात्वेन स्वीकारे । "शिक्षाविहितं व्याकरणविहितं चास्मिञ्छास्त्रे उभयं यतः प्रक्रियते" इति शुक्लयजुःप्रातिशाख्ये "वृद्धं वृद्धिः" इति सूत्रस्थमुव्वटाचार्यवाक्यम्[1], कृष्णयजुःप्रातिशाख्ये "[2]अकारो व्यञ्जनानाम्" इति सूत्रव्याख्यास्थम्—

[3]शिक्षाव्याकरणानां यदयं विवरणात्मकः ।
ग्रन्थस्ततोऽत्र नातीव शब्दसङ्कोच इष्यते ॥

इति गार्ग्यगोपालयज्ववाक्यं च शिक्षाव्याकरणाभ्यां भिन्नं प्रातिशाख्यमित्यवगमयत इति यदि ब्रूयात् तत्रोत्तरमिदमेव शिक्षालक्षणमनन्वयेऽन्यथा वर्णनमसङ्गतमिति । निर्मत्सराः सर्वशास्त्रविशारदा विद्वन्मूर्धन्या अत्र विचारयन्तु ।

तत्र चतुर्णां वेदानां भिन्नानि प्रातिशाख्यानि समुपलभ्यन्ते । ऋग्वेदीयं शौनकप्रणीतं प्रातिशाख्यमुव्वटभाष्योपेतं डा० मङ्गलदेवशास्त्रिमहाभागः समपादयत् । कृष्णयजुर्वेदीयं प्रातिशाख्यं बह्वीभिर्व्याख्याभिस्सह मैसूर-मद्रपुर-विश्वविद्यालयाधिष्ठिता विद्वद्धौरेयाः प्रकाशयामासुः । उव्वट-अनन्त-भाष्योपेतं शुक्लयजुःप्रातिशाख्यं च चौखम्बा-मद्रपुरी-विश्वविद्यालयतः निरसरत् । ज्योत्स्नावृत्त्या सह प्रातिशाख्यं शुक्लयजुर्वेदीयमचिरादेव वैदिकानुसन्धानसमितेर्निस्सरिष्यति । सन्ति सामवेदे चत्वारि प्रातिशाख्यानि—ऋक्तन्त्रं सामतन्त्रमक्षरतन्त्रं पुष्पसूत्रञ्चेति । तत्र ऋक्तन्त्रे गीतीनामाधारभूतासु ऋक्षु वर्णानामुच्चारणप्रकारः, संज्ञा, पदानां सन्धिः, स्वराणां सन्धिः, षत्वणत्वदीर्घलोपादयस्सप्रमाणं विवेचिताः । अत्र पञ्चप्रपाठकाः, २८६ सूत्राणि वर्तन्ते । तच्च डा० बर्नलमहोदयः, मङ्गलोरनगरतः १८७९ तमे

1. शु. य. प्रा. १ १६९
2. तै. प्रा. १-२१
3. तै. प्र. २६

क्रैस्तवाब्दे सम्पादयामास । इदानीं स ग्रन्थो दुर्लभो जातः । डा० सूर्यकान्त-शास्त्रिमहाभागः प्रसन्नया विस्तृतया भूमिकया तुलनात्मिकया टिप्पण्या च पञ्जाबविश्वविद्यालयतः प्राकाशयत् ।

## अक्षरतन्त्रम्

ऋचां गानकाले रथन्तरादिषु सामसु यावन्तस्स्वरा अपेक्षितास्तावतां स्वराणामृच्यक्षराणि न सन्ति । ततो गीत्याश्रयाणि कानिचन पदानि पठन्ति येषां स्तोभ इति वैदिकी समाख्या । स्तोमानामेव नामान्तरमक्षर-मिति । तथाहि "[1]अनृगाद्यक्षरम्" इति परिभाषासूत्रम् । स्तोमानां लक्षणमेवं वर्णयन्ति मीमांसकाः "[2]अधिकं च विवर्णं च जैमिनिः स्तोभशब्दत्वात्" इति । ते च स्तोमाः सार्थकनिरर्थकभेदेन द्विधा भवन्ति । नृम्णे, निधीमहि अग्निष्पतीत्येवमादयस्सार्थकाः । हाइ, हाउ, औहोवा ई इत्येवमादयो निरर्थकाः । निरर्थकान्स्तोभानभिप्रेत्यैव लोकेऽपि निरर्थकशब्दस्तोमं स्तोभ-शब्देन व्यवहरन्ति । गीतिषु कानि वा पदानि ऋगधिकानि गेयानीत्यत्रास्ति कश्चन समयः । तानि च पदानि स्तोभाख्ये ग्रन्थे पठितानि । पुनरपि तौ स्तोभौ द्विविधौ भवतः-अन्वयी, अनुषङ्गी चेति ।

"[3]अन्वयी तु पदादौ स्यादनुषङ्गी पदात्परः"

इति च तयोस्स्वरूपमुपवर्णितं स्तोभानुसंहारे । तेषां स्तोभानां कर्षणलोपविकारा यत्र प्रतिपादिताः स ग्रन्थः अक्षरतन्त्रमित्यभिधीयते । अस्यैव संज्ञालक्षणम् संज्ञाप्रकरणमिति नामान्तरम् । इदं च सामतन्त्र-शेषम् । सामवेदसर्वानुक्रमणिकायाम्—

[4]सामतन्त्रं प्रवक्ष्यामि सुखार्थं सामवेदिनाम् ।<br>औदव्रजिकृतं सूक्ष्मं सामगानां सुखावहम् ॥<br>तत्र प्रपाठकाः प्रोक्तास्तिथिसंख्या मुनेर्मताः ॥

---

1. अ. त. १-१-१
2. जै. सू. ९. २. ३९
3. स्तो. Page 55
4. सा. स. Page 4

इति सामतन्त्रं पञ्चदशप्रपाठात्मकं न्यरूपि। परं सर्वेष्वादर्शग्रन्थेषु त्रयोदशप्रपाठकान्ते सामतन्त्रं सम्पूर्णमित्युपलभ्यते। ततश्च तच्छेषरूपमेवाक्षरतन्त्रम्। गीतिप्रतिपादनमुभयत्र समानमिति मत्वैकमेवेदं शास्त्रमित्येकत्वेन व्यपदिष्टम्। व्युत्पाद्यानां स्वराणां ऋगक्षरस्तोभाक्षराश्रयभेदेन भेदेन व्यपदेशः सामतन्त्रम्, अक्षरतन्त्रम्, इति। दृश्यते च लोके–वेदार्थविचाररूपं शास्त्रं मीमांसासंज्ञितं कर्मकाण्डभागाश्रितं धर्ममीमांसेति, उपनिषद्भागाश्रितं ब्रह्ममीमांसेति व्यपदिश्यते। तत्र फलाधिकारिजिज्ञास्यभेदो भेदे निदानमिति चेदत्रापि ऋक्स्तोभ इति ग्रन्थद्वयाश्रयत्वात्कथंचिद् भेद ऊहनीयः। नह्यसति कारणे भेदस्य वृथैव तं प्रामाणिका व्यपदिशेयुः। व्यपदिशन्ति च सामतन्त्रम्, अक्षरतन्त्रमिति।

तदिदमक्षरतन्त्रं स्वनिर्मितया टिप्पण्या सह सामश्रमिसत्यव्रतभट्टाचार्यमहोदयः प्रकाशयामास। तत्र चानयोस्सामतन्त्राक्षरतन्त्रयोः कर्ता भिन्न इति प्रतिपादयति-सामतन्त्रप्रणेता गार्ग्यः, अक्षतन्त्रप्रणेता आपिशलिरिति। नात्र दृढतरं प्रमाणमुपलभामहे। अत्र द्वौ प्रापठकौ स्तः। प्रतिप्रपाठकं त्रयोदश दशकाः सन्तीति, सूत्राणि च द्विषष्ट्युत्तरशतमिति च भट्टाचार्यो निरूपयामास। परं तत् सामवेदानुक्रमिण्या विसंवदते। सामवेदसर्वानुक्रमणिकायां—

> [1]चतुर्दशे प्रपाठके खण्डा आदित्यसंज्ञकाः।
> खण्डाः त्रयोदश प्रोक्तास्तिथिसंख्याप्रपाठके॥ इति।

## पुष्पसूत्रम्

अस्ति पुष्पसूत्राभिधानं सामवेदीयं प्रातिशाख्यम् माध्यन्दिनपवमानादिषु विनियुक्तानां पौरुषेयाणां साम्नां लक्षणनिरूपणपरं पुष्पाचार्यप्रणीतम्।

1. सा. स. Page 4.

अयं च ग्रन्थो दशप्रपाठकात्मकः। तस्य च बह्व्यो व्याख्यास्सन्ति। तत्राजातशत्रुकृतभाष्यं पण्डितकुलमान्या स्वनामधन्या द्राविडोपाह्वमहामहोपाध्यायश्रीलक्ष्मणशास्त्रिमहाभागाः सरस्वतीभवनस्थमादर्शग्रन्थमवलम्ब्य सम्पादयामासुः। इममेव ग्रन्थं रोमन्लिप्यां जर्मनीभाषानुवादेन साकं १९०८ तमे क्रैस्तवाब्दे विदेशीयः आर, सिमन् ( Richard Simon ) महाभागः सम्पादयामास। "नानाभाई" इति विश्रुतेन पं. त्रिपाठिदामोदरसुनुना श्रीरामकृष्णदीक्षितेन फुल्लदीपसंज्ञकं पुष्पसूत्रभाष्यं व्यरचि। सानन्दं विनिवेदयामि–अचिरादेवामुं ग्रन्थं भगवतो विश्वेश्वरस्य कृपया समितिरियं प्रकाशयिष्यतीति। श्रीविश्रामशुक्लात्मजश्रीशिवरामविरचिता काचन व्याख्या मध्ये त्रुटिता वर्तते। फुल्लपोत इति विस्तृताऽन्या व्याख्या।

ऋक्तन्त्राक्षरतन्त्रपुष्पसूत्राणां प्रातिशाख्यमित्येव सर्वैर्मनीषिवर्गैस्समाख्या कृतेति, तन्मध्यपतितस्य सामतन्त्रस्य तत्र तत्रादर्शपुस्तकेषु व्याकरणत्वेन निर्देशे कृतेऽपि प्रातिशाख्यमित्येव संज्ञाकारि मया। स्वराः किलात्र व्युत्पाद्यन्ते। न तु प्रकृतिप्रत्ययविचारो ऽस्त्यत्र। तन्मध्यपतितत्वं चास्य गोभिलगृह्यकर्मप्रकाशिकायां परिदृश्यते—

[1]ऋक्तन्त्रं सामतन्त्रं च संज्ञालक्षणमेव च।
धातुलक्षणकं च स्यादिति व्याकरणानि च॥ इति।

सामवेदसर्वानुक्रमणिकायां च—[2]अथ सप्तदशलक्षणम्—

गृह्यं गायत्र (त्रं ?) ऋक्तन्त्रं सामतन्त्रं च पुष्पकम् इति।

अनुक्रमणिकायां सप्तदशसु लक्षणेषु गृह्यस्य परिगणनं कृतम्। तच्च मनोहरमिति मे भाति। यत्र मन्त्रानाश्रित्योच्चारणप्रयोगः शिष्यते स ग्रन्थो लक्षणग्रन्थो भवेत्। गृह्ये पुनः विवाहादयः स्मार्ताः पदार्थाः प्रतिपाद्यन्ते।

---

1. गो. गृ. क. प्र. P. 2 a
2. सा. म. Pagr 2
3. सा. म. Pagr. 3

नेदं ग्रन्थान्तरमिति मन्तव्यम् । तत्रैवोपरिष्टात्पूर्वमुद्दिष्टस्य गृह्यस्य स्वरूपं समगृह्णात्—[3]"अथातः पौर्णमासो हि आप्लकाम्यप्रयाणकः पुनर्दहनमेतेषु" इति । अस्तु समयान्तरेऽत्र विचारं प्रस्तोष्ये ।

## सामतन्त्रम्

वेदेषु यावन्ति पदानि तानि नवधा भवन्तीति शिक्षाकारैः प्रतिपादितम्

[1]अन्तोदात्तमाद्युदात्तमनुदात्तं नीचस्वरितम् ।
मध्योदात्तं स्वरितं द्व्युदात्तं त्र्युदात्तमिति नवपदशय्या ।
अग्निः सोमः प्र वो वीर्यं हविषां स्वर्बृहस्पतिः ।
इन्द्राबृहस्पती" इति ।

अस्यायं भावः । आभ्यां श्लोकाभ्यां वैदिकं पदस्वरूपं सोदाहरणं प्रकटीक्रियते । पदमन्तोदत्तं भवति यथा—अग्निः । आद्युदात्तं पदं यथा—सोमः । उदात्तं पदं भवति यथा— प्र । अनुदात्तं पदं भवति यथा—वः । नीचस्वरितं पदं यथा —वीर्यम् । मध्योदात्तं पदं यथा—हविषाम् । स्वरितं पदं यथा स्वः । द्व्युदात्तं पदं यथा—बृहस्पतिः । त्र्युदात्तं पदं यथा—इन्द्राबृहस्पती । इति । एवं नवधा पदशय्या भवतीति ।

अत्र कश्चनैवं सन्दिह्यात्,—न नवधव पदशय्या । एकादशधा पदशय्या भवितुमर्हति । तथाहि "[2]स्वरितवर्जमेकोदात्तं पदमि" ति शुक्लयजुःप्रातिशाख्यसूत्रभाष्ये उव्वटः-"तत्र स्वरितस्य चत्वारो भेदा भवन्ति-तद्यथा-आदिस्वरित-मध्यस्वरितान्तस्वरित-सर्वस्वरितानि पदानि भवन्ति । × × × उदात्तस्य चत्वारो भेदा भवन्ति । तद्यथा आद्युदात्तमध्योदात्तान्तोदात्तसर्वोदात्तानि पदानि । × × × एता अष्टौ पदभक्तयोऽनेन सूत्रेणोक्ताः । द्व्युदात्तत्र्युदात्तसर्वानुदात्तानि वक्ष्यति । एवमेता एकदश पदभक्तयो भवन्ति सर्ववेदेषु ।" इति

1. पा. शि. ५४ 2. शु. य. प्रा. २. १.

तत्रेय समाधिः–अस्तु नामैकादशधा प्रदर्शनम् । नैतावता पाणिनि-शिक्षावाक्यस्य विरोधः । तथाहि—आदिस्वरितं स्वरितं इत्यनयोः पदयोर्न महान्भेदोऽवलोक्यते । शिक्षाकाराणां नवधागणनेऽयमभिप्रायः–उदात्तानुदात्त-स्वरितानां शुद्धानां परस्परं समिलितानां च नवधैव विभागः कर्तुं शक्यत इति । ततश्च व्युप्तक्रेशायेत्यतः स्वः इत्यस्य भेदो नावलोक्यते । उभयत्रैकस्यैव स्वरितस्य विद्यमानत्वात् । यद्येवं आद्युदात्तोदात्तयोरेकत्वं सम्पद्यत इति चेत् । न । आद्युदात्ते पदे उदात्तस्वरः स्वरितस्वर इति स्वर-द्वयमस्ति । सर्वोदात्ते पदे उदात्त एव । आद्यस्वरिते पदे न तथा स्वर-द्वयमवलोक्यते । एवं मध्यस्वरितान्तस्वरितयोर्नीचस्वरितेऽन्तर्भावः । प्राति-शाख्ये शिष्यबुद्धिविकासार्थमेव तथा प्रतिपादनम् । एवं पदशय्याविचारः किमर्थमस्यां भूमिकायां कृत इति चेत् , अत्र ब्रूमः–यथा त्रयाणां स्वराणां शुद्धानां परस्परमिलितानां नवधा भावः तथा साममन्त्राणां मार्कि ३०५ पदशय्या भवन्तीति व्युत्पादनमेव ।

## सामस्वराः

सामवेदे क्रुष्ट— प्रथम-द्वितीय तृतीय चतुर्थ-मन्द्रा तिस्वार्या इति सप्त स्वराः । इम एव क्वचित् क्रुष्टप्रथमद्वितीयतृतीयचतुर्थपञ्चमान्त्या इति मध्यम-गान्धार-ऋषभ-षड्ज निषाद-धैवत—पञ्चमा इति वेदलोकयोः प्रसिद्धाः । तथाहि—सामविधानब्राह्मणे 'क्रुष्टः प्राजापत्यो ब्राह्मो वा वैश्वदेवो वा आदि त्यानां प्रथमः, साध्यानां द्वितीयः, अग्नेस्तृतीयः, वायोश्चतुर्थः, सौमो मन्द्रः मित्रावरुणयोरतिस्वार्य" इति सर्वत्र प्रसिद्धानां सप्तानां स्वराणां प्रयोगकाले देवतास्मरणार्थं देवतानिरूपणव्याजेन सञ्ज्ञाः प्रतिपादिताः । बृहद्देवताकारः शौनकः—

1. सा. वि ब्रा. १ १. २१

[1]वैश्वदेवः स्वरः क्रुष्टो नित्यं यो मूर्ध्नि तिष्ठति ।
तालव्यः प्रथमः साम्नां स्वर आदित्यदैवतः ॥
स्वरो द्वितीयस्साध्यानां भ्रुवोर्देशं समाश्रितः ।
आश्विनस्तु तृतीयोऽत्र स्वरः कर्णौ समाश्रितः ॥
चतुर्थस्त्वत्र वायव्यो नासिक्यः स्वर उच्यते ।
पञ्चमस्तु स्वरः प्रोक्तश्चाक्षुषः सूर्यदैवतः ॥
यस्तु सामस्वरः षष्ठः स सौम्यो मन्द्र उच्यते ।
विकर्षेण तु मन्द्रस्य युक्तोऽतिस्वार्य उच्यते ॥
स मैत्रावरुणो ज्ञेयः मन्द्रस्थानसमाहितः ।

इति वदन्क्रुष्टस्य वैश्वदेवत्वं तृतीयस्याश्विनत्वं च प्रतिपादयामास । अन्तिमस्यातिस्वार्यस्य द्विदेवत्यत्वं सयुक्तिकं स्वीकरोति स्म । प्रथमे ये स्वरास्ते स्वतन्त्रा अपि भवन्ति । अतिस्वार्यस्तु न तथा । मन्द्रात्कर्षण एव संभवति । ततश्चान्यं स्वरमुपजीव्यैव स वर्तते । ततश्च मन्द्रः द्विस्वभावकः । शुद्धः अन्योत्पादनात्मा चेति । शुद्धस्तु—"अग्निस्तूताम्" इत्येवमादिः । अन्योत्पदनात्मा तु—तद्वोगायसुतेमचाऽ६ए इत्यादिः । तत्र शुद्धस्य सोमः । अन्यस्वरेण युक्तोऽतिस्वार्य इति द्विदेवत्यः इति । अतएव—

[2]"मन्द्रकर्षणसंयुक्तमतिस्वारं प्रशंसती" त्यन्त्राह । पूर्वैः पद्यैः अष्टौ स्वराः—क्रुष्टप्रथमद्वितीयतृतीयचतुर्थपञ्चममन्द्रातिस्वार्या इति प्रत्यपादयत् । अन्यत्र पञ्चमस्य मन्द्रत्वेनैव निर्देशः—

---

1. बृ. दे. ८. ११९–१२०.    2 बृ. दे. ८. ११३.

[1]क्रुष्टो मूर्धनि विज्ञेयस्तालव्यः प्रथमः स्वरः।
द्वितीयस्तु भ्रुवोर्मध्ये तृतीयः कर्णसंश्रितः॥
चतुर्थो नासिकाग्रे स्यादौरसो मन्द्र उच्यते।
मन्द्रकर्षणसंयुक्तमतिस्वारं प्रशंमति ॥ इति

विषयेऽत्र बहु विवेचयितव्यम्। समयान्तरे विवेचयिष्यामि।

सर्वे जीवा इमानेव सप्त स्वरानुपजीवन्तीति सामविधानब्राह्मणे निरूपितम्—"[2]स वा इदं विश्वं भूतमसृजत। तस्य सामोपजीवनं प्रायच्छत्। तद्योऽसौ क्रुष्टतम इव साम्नः तं देवा उपजीवन्ति। योऽवरेषां प्रथमस्तं मनुष्याः, यो द्वितीयस्तं गन्धर्वाप्सरसः, यस्तृतीयस्तं पशवः, यश्चतुर्थस्तं पितरो ये चाण्डेषु शेरते। यः पञ्चमस्तमसुररक्षांऽसि। योऽन्त्यस्तमोषधयो वनस्पतयो यच्चान्यज्जगदि"ति। अत्र मन्द्रातिस्वार्ययोः पञ्चमान्त्यत्वेन निर्देशः कृतः।

नारदशिक्षायां लौकिकानां निषादादीनां स्वराणां सामस्वरप्रभवत्वं प्रदर्शितम्—

[3]यस्सामगानां प्रथमः स वेणोर्मध्यमः स्वरः।
यो द्वितीयस्स गान्धारः तृतीयस्त्वृषभः स्मृतः॥
चतुर्थः षड्ज इत्याहुः (त्युक्तः) पञ्चमो धैवतो भवेत्।
षष्ठो निषादो विज्ञेयः सप्तमः पञ्चमः स्मृतः॥ इति।

[4]"सामवेदादिदं गीतं सञ्जग्राह पितामहः।"

*इति लौकिकस्य गानस्य सामवेदप्रभवत्वं प्रदर्शयन्सङ्गीतरत्नाकरकारः* लौकिकानां स्वराणां नामानि तन्निर्वचनं चैवं समुपदिशति—

---

1. ह्. दे. ८. ११२.
2. सा. वि. ब्रा. १-१-८-११.
3 ना. शि. ४.१.
4. सं. र. १. २५.

[1]श्रुतिभ्यस्तु स्वराः षड्जर्षभगान्धारमध्यमाः ।
पञ्चमो धैवतश्चाथ निषाद इति सप्त ते ।
तेषां संज्ञा सरिगमपधनीत्यपरा मता ॥
षण्णां स्वराणां जनकः षड्भिर्वा जन्यते स्वरैः ।
षडभ्यो वा जायतेऽङ्गेभ्यः षड्ज इत्यभिधीयते ॥
प्राप्नोति हृदयं शीघ्रमन्यस्मादृषभः स्मृतः ।
स्त्रीगवीषु यथातिष्ठन्विभाति वृषभो महान् ॥
स्वरग्रामे समुत्पन्नः स्वरोऽयं ऋषभस्तथा ।
वाचं गानात्मिकां धत्ते इति गान्धारसंमितः ॥
गान्धर्वसुखहेतुत्वाद्वा गान्धारः ।
स्वराणां मध्यमत्वाच्च मध्यमः स्वर उच्यते ॥
स्वरान्तराणां विस्तारं यो मिमीते स पञ्चमः ।
पाठक्रमेण गणने संख्यया पञ्चमोऽथवा ॥
धीर्यस्यास्ति स धीवांस्तत्संबन्धी धैवतः स्मृतः ।
षष्ठस्थाने धृतो यस्मात्ततोऽसौ धैवतो मतः ॥
निषीदन्ति स्वराः सर्वे निषादस्तेन कथ्यते । इति

षड्जादीनां प्रथममक्षरं गृहीत्वा "सरिगमपधनि" इति व्यवहारो लौकिक इत्यभियुक्ता आमनन्ति । इमे सप्त स्वरास्तिरश्चां वाचि समुपलभ्यन्त इति प्रामाणिका निर्दिशन्ति—

[2]षड्जं मयूरो वदति गावो रम्भन्ति चर्षभः (म्)
अजाविके तु गान्धारं क्रौञ्चो वदति मध्यमम् ॥
पुष्पसाधारणे काले कोकिलो वक्ति पञ्चमम् ।
अश्वस्तु धैवतं वक्ति निषादं वक्ति कुञ्जरः ॥ इति

---

1. सं. र. ३. २३.   2 ना. शि. ४. ३. ४.

एतैस्सप्तभिर्लौकिकैस्स्वरैस्तास्ता देवताः स्तुत्वा धर्मार्थकाममोक्षाख्यां-श्चतुरः पुमर्थानाप्नुवन्ति मानवाः ।

[1]तस्य गीतस्य माहात्म्यं के प्रशंसितुमीशते ।
धर्मार्थकाममोक्षाणामिदमेवैकसाधनम्" इति चान्यत्र ।

अत एव नित्ये निरतिशये ब्रह्मणि मनो निधातुमसमर्थस्य यतेः तत्रैकाग्र्यं सम्पिपादयिषतः कर्तव्येषूपायेषु गीतेरपि समावेशः कृतः स्मृतिकारैः। याज्ञवल्क्यः—

[2]यथाविधानेन पठन्सामगायमविच्युतम् ।
सावधानस्तदभ्यासात्परं ब्रह्माधिगच्छति ॥

इत्युपक्रम्य लौकिकगानमपि चित्तसमाधानायालमित्यवोचत्—

[3]वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ।
तालज्ञश्चाप्रयासेन मोक्षमार्गं नियच्छति ॥ इति ।

नियच्छति प्राप्नोतीति मिताक्षरा ।

तदेवं सप्तस्वरैः सामगा गायन्तीति सर्वविदितोऽयं विषयः । तत्र क्रुष्टातिस्वार्यस्वराभ्यां सामारम्भो न दृश्यते । इतरैः पञ्चभिस्स्वरैः सामान्या रभ्यन्ते । क्रुष्टस्वरेण समाप्तिरपि नास्ति । अतिस्वार्येण समाप्तानि बहूनि सामानि । एषां सप्तानां स्वराणां स्वतन्त्राणां परस्परं मिलितानां चोच्चनीचं

1 स. र. १ २०
2 या स्मृ ३ ३४०
3 य स्मृ ३ ३४०

स्वरूपमुपलभ्यते। तत्र प्रथमस्वरेणारब्धानि पर्वाणि ९२, द्वितीयस्वरेण ११८, तृतीयस्वरेण ४५, चतुर्थस्वरेण २३, पञ्चमस्वरेण २०, क्रुष्टेन २, इति। ग्रन्थगौरवभियात्र तानि न सङ्कलितानि मनाक् प्रतिपाद्यन्ते।

छन्दोगा यत्र विरम्य पठन्ति तत्पर्वेति परिभाषाकार आह। तच्च पर्व द्विविधम्—एकस्वरमनेकस्वरं चेति। यस्मिन्पर्वण्येक एव स्वरो वर्तते तदेकस्वरं पर्व। तत् षड्विधं भवति। तानि च पर्वाणि [1]"स्वरोऽनन्त्यः" इत्यनेन प्रदर्शितानि। तेन सूत्रेणाविस्वार्यव्यतिरिक्तानां प्रकृतग्रन्थोपयुक्तानां स्वराणां स्वरूपमपि संसूचितम्। द्वितीयादिसूत्रैरनेकस्वरवन्ति पर्वाणि निरूप्यन्ते। अनेकस्वर पर्व त्रिविधम्—अनुलोमगीतं प्रतिलोमगीतमुभयविधगीतं चेति। तत्रावरोहक्रमेण गानमनुलोमगीतं भवति। अर्थादुच्चादिनीचान्तम्। यथा—

१ २ २ ३ ४ ५<br>
आन्धाः, एऽ३-, हॅऽ४, जारा, इति द्वयोः स्वरयोः।

१ २ २ ३ ४ ५१ १<br>
अग्नायेऽ३, र्याऽ३४म्, अत्यग्ने, इति त्रयाणाम् स्वराणाम्, ताऽ२३४ म्,

२३४ ५ १<br>
ऊतएकाम् इति चतुर्णाम्, ओऽ२३४५ इ—इति पञ्चानां स्वराणाम्। यत्र प्रथमात् द्वितीयो भवति तस्यैव संज्ञान्तरं निघात इति।

[2]"तर्जन्याधः (?) पतन्यु (?) च्चात् सन्निघात इतीरितः" इति।

विपरीतगीतं प्रतिलोमगीतं भवति। आरोहक्रमेण नीचादुच्चान्तं गानम्। यथा—

२ १ २१ २ ४ २४ ३२२१<br>
द्वयोः स्वरयोः-नन्दाइ एहिया, हाऽ३-पुरू इति, नुपेजना इति त्रयाणां

---

1 सा. त १ 2. सा. स. Page ८.

२र ३१२ १
स्वराणाम् । सहोयानन्ता इति चतुर्णाम् । अत्रापि द्वितीयादिप्रथमान्तस्यो-

द्धात इति सज्ञान्तरम्—

"तर्जनीतः समुत्क्षिप्त उद्धातः परिकीर्तितः" इति । उभयविधगीत

१ २१
द्विविधम्–उच्चाद्युच्चान्त नीचादिनीचान्त चेति । उच्चाद्युच्चान्त यथा–पाइऽयताइ
२ १ २१२१ ४ १ ३२१ २११२१
हऽमिया प्रेष्ठया', चाऽरदक्षमाइ । नीचादिनीचान्त यथा—त्वमहोभि.
१२ २१४ २ ४ २र
प्रगोऽ२-र्तूताऽ३म्नोऽ३विश्ववेदसाम् । अत्र च केषाचित्पर्वणा [2]अन्धा

इत्यादि सज्ञैः संज्ञाः क्रियन्ते । अनेक एव स्वरः यदि स्वरान्तर प्राप्नोति

१
तदा तस्य विस्वर इति सज्ञा–यथा—ओऽ२३४५इ इत्यत्रौकारः प्रथम

स्वरस्सन्मन्द्रान्त दृष्ट इति विस्वरः । विस्वरमक्षर स्वरे स्वरे त्रिमात्र

भवति प्रत्युत्क्रमातिक्रमकर्षणस्वारेष्विति मात्रालक्षणे प्रतिपादितम् । अस्मि

न्सामतन्त्रेऽपि तेषा प्रत्युत्क्रमादीना स्वराणा लक्षितत्वात्तत्स्वरूपं प्रदर्श्यते ।

तत्र प्रत्युत्क्रमगीत नवविध भवति, (१) अतिस्वार्य. मन्द्र प्रत्युत्क्रामति
१२ ४ २र र
हिराऽ३साऽ५दाऽ६५६म् । (२) मन्द्रश्चतुर्थं प्रत्युत्क्रामति–तरोभिर्वोविदा
४ ४३
ऽ४द्वसुम् । (३) चतुर्थस्तृतीय प्रत्युत्क्रामति–यज्ञाऽ५य (४)
३२२१
तृतीयो द्वितीयं प्रत्युत्क्रामति–जुपेनना । (५) द्वितीय प्रथम प्रत्युत्क्रामति
२१र २३२
पुत्राजिजहनात् । (६) मन्द्रश्चतुर्थमतिक्रम्य तृतीय प्रत्युत्क्रामति–नरमोइ ।
४ ५
(७) मन्द्रश्चतुर्थतृतीयावतिक्रम्य द्वितीयं प्रत्युत्क्रामति–अभिप्रियाऽ२ ।

1 सा स Page ८ 2 सा त २

सोऽयं "मन्द्राद्वितीयं द्रमदनायां" इत्यादिभिः संलक्षितः। (८) तृतीयो द्वितीयमतिक्रम्य प्रथमं प्रत्युत्क्रामति-पुनाऽ३१। (९) मन्द्रः चतुर्थतृतीयद्वितीयानतिक्रम्य प्रथमं प्रत्युत्क्रामति-ईऽ५हीहीहीहीहि। अस्यैव नु इति नामान्तरम्। एवमतिक्रमश्चतुर्विधः-अतिक्रमो नाम अवरोहणगीतौ स्वरः क्रमेणोपनतं स्वरान्तरं विहाय ततः पराचीनं स्वरं प्राप्नोतीत्यर्थः। तथाहि ओऽ२३४५इ इत्यत्र प्रथमस्वर ओकारः क्रमेण द्वितीयादीन्स्वरान्प्राप्नोति। यदा क्रमागतं स्वरमतिक्रम्य स्वरान्तरं प्राप्नोति तदातिक्रमः। स चतुर्विधो भवति।

१. क्रुष्टः प्रथममतिक्रम्य द्वितीयं प्राप्नोति-ऊऽ२ इति। तदयं क्रुष्टां जिमिगोः" इत्यनेन प्रथमस्वरातिक्रमः प्रदर्शितः।

२. प्रथमो द्वितीयमतिक्रम्य तृतीयं प्राप्नोति-नाकेसुपार्णमुपयात्पतन्ताम्। मामीऽ३या। अत्र मीकारोपरि नमनस्वरः। नमनस्वरोच्चारणकाले तं स्वरं तर्जन्यधोभागमारभ्याग्रं प्राप्याकाशं क्रमेण लब्ध्वा तृतीयस्वरे पतन्नङ्गुष्ठः प्रतिपादयति। ततश्च नमनं प्रथमस्वर एव भवति। अत एव परिभाषाकारः नमनस्वरेणाऽऽरब्धानां पर्वणां गि गी गु गू गे इति स्वरसंज्ञां चकार। प्रतिज्ञातं च[3] "कवर्गः प्रथमस्वराणां तदादीनां च पर्वणां संज्ञे"ति।

---

1. सा. त. २७६
2. सा. त. ४८५
3. सा. प. पृ. १७

३. तृतीयश्चतुर्थमतिक्रामति–यज्ञा५य। चाऽ२र्तोऽ३५हाइ। "[1]ऽयन्दि" इत्यनेन सूत्रेणायं व्युत्पादितः।

४. प्रथमो द्वितीयतृतीयचतुर्थानतिक्रम्य मन्द्रं प्राप्नोति–ई५हीहीहीही-हि। [2]"इर्विं योनिवु" इत्यत्रायं प्रतिपादितः।

केचनातिक्रमशब्दप्राधान्यं मन्वानाः प्रत्युरक्रमे येऽतिक्रमाः संदर्शिता-स्तानत्र परिगणयन्ति। तेषां पक्षे नवविधोऽतिक्रमः। यद्यप्येकस्मिन्नेव पर्वणि प्रथमो मन्द्रं मन्द्रश्च प्रथमं प्राप्नुतः तथापि द्वैविध्यं मया प्रतिपादितम्।

कर्षणं पञ्चविधम्। प्रथमस्य आद्वितीयकर्षणम्, आतृतीयकर्षणम्, आचतुर्थकर्षणम्, आमन्द्रकर्षणम्, मन्द्रस्यातिस्वार्यात् कर्षणं चेति।

आद्वितीयकर्षणं यथा—स्थूऽ२।

आतृतीयकर्षणं यथा—आऽ२३-।

आचतुर्थकर्षणं यथा—होऽ२३४विंयाः।

आपञ्चमकर्षणं यथा—ओऽ२३४५इ।

मन्द्रकर्षणं यथा—इदाऽ६मे इति। द्वितीयः यदि तृतीयं प्राप्नोति तदा प्रणतमिति संज्ञा। स एव यदि चतुर्थान्तं कृष्यते–यथा–ज्योताऽ३४-इति, तृतीयो यदा कृष्यते तदा तेषां संज्ञा नोपलभ्यते।

स्वारस्त्रिविधः प्रथमादिः, द्वितीयादिः, तृतीयादिश्चेति।

---

1. सा. त. ४०४ 2. सा. त. ४०६

१ १११
प्रथमादिर्यथा-किनेऽ२३४५ ।

२ १११
द्वितीयादिर्यथा-वाऽ३४५ ।

३ १११
तृतीयादिर्यथा-हुऽ२३४५ ।

एवं विनतप्रणतोत्स्वरिताभिगीतान्यपि सामतन्त्रे प्रतिपादितानि । एषां स्वरूपं मात्रालक्षणेऽभिहितम् ।

१ विर
विनतं प्रथमादिर्द्वितीयान्तम्-अग्निर्नोऽ२ ( विनतस्याक्षरस्योपरि "वि" इति संज्ञा क्रियते । अस्यैव "मिन्" इति संज्ञा )

२
प्रणतम्-द्वितीयादिस्तृतीयान्तम्-प्रचेतऽ३ः ।

४ ४र ५
उत्स्वरितम्-चतुर्थादिर्मन्द्रान्तम्-मनुष्येऽ४भिरग्निः ।

११ अ ५
अभिगीतम्-द्वितीयादिः प्रथमान्तम्-स्तोमाऽरुद्राऽ२३या ।

एवं नमनं प्रेङ्खः-इत्यपि स्वरद्वयम् विद्यते ।

३ म २
नामनं यथा-ओमोऽ३वा ( अतिक्रमे गतम् )

प्रेङ्खो द्विविधः-प्रथमादिर्द्वितीयादिश्चेति

१ —
प्रथमादिर्यथा-तोयाऽ२इ

२ —
द्वितीयादिर्यथा—मतौऽ२

एवं कर्षणात्परं आरादयो स्वरा भवन्ति । तदेवं सप्तानां स्वराणां परस्परं संमलितानां व्यस्तानां स्वरूपं यावदपेक्षितं प्रदर्शितम् ।

एवमस्मिन्ग्रन्थे विशिष्टाः केचन स्वरसमुदायाः प्रदर्शिताः—नन्दा, दीपावस्ता, शता इत्येवमादयः । तेषां स्वरूपमप्यधस्तात्प्रदर्श्यते ।

| पर्वनाम | पर्वस्वरूपम् | मूलस्थलनिर्देशः | प्रकृतग्रन्थस्थलनिर्देशः |
|---|---|---|---|
| अग्निदूता | अग्निदूताम् | १.१.५ | १८४,५९८,६६९.८९२.११८४ |
| अचिक्रः | अचिक्रद्देऽ३, अचिक्रदाऽ३त् | १६.२.२१, १४.१.१ | ९६० |
| अतिथिः | अतिथाइम् | १.१.११ | ७०१ |
| अद्या | अद्याहोइ | १.२.३४ | ११४३ |
| अन्धाः | आन्धाः | ८.१.३६ | ९६,१७८,५१२,५२३,५५८, ८८८,१०२४,१२९१,१३०० |
| अभि | अभिवाऽ२३४५; मिगायाऽ२३ता | १७.१.३९, १७.१.६ | ३७६,६२४ |
| अमृता | अमृतञ्जाऽ३ | १.२.२३ | ७२६ |
| आइन्द्रा | आऽ२३इन्द्रा | १२.२.२२ | ७७,६४२,६५०,८९३ |
| आइपाता | आइपाऽ३ताइ | ९.२.११ | ११२८ |
| आत्वा | आत्वासहस्रमाशतमा-आत्वद्यासाऽ६चदुषाम् | ६.२.२५, ८.१.१६ | ७७५,९०६ |
| आदित्प्रत्ना | आदित्प्रत्नाऽ५स्यरेतसाः | १.१.३४ | ९०९ |

| | | | |
|---|---|---|---|
| आनीकया | १ २ २ २<br>आनीकयाऽ२१उवायेऽ२ | २.२.३० | ५०५,५०६,५०७,५५७ |
| आया | — १<br>आऽ२याम् | ८.२.१४ | ७२,४६५ |
| आत्रे | ४ ५<br>आत्रा | ४.२.४ | ४२२ |
| आहा | १ अ २<br>आहयंता | १६.१.३५ | ७६ |
| इष्टा | ५ २ ४ ५<br>इष्टाहोत्राः | ४.२.१२ | ७४५,१०९६,११४६,१३०९ |
| ईया | ३२ २ ३ ४ ५<br>ईयानःकृष्णाः | ८. २. १९ | ६६२ |
| ईशे | २११ २ —<br>ईशीयवस्व मौऽ२ | ३. २. १८ | ३३४, ११५२ |
| उग्रंशर्मा | २१ २१<br>उग्रँ शर्मा | १२. २. १३ | ६१४ |
| उता | १ २ —<br>उताद्वाऽ१इषाऽ२ः | १. १. १२ | १२२० |
| ऊता | २३४५<br>ऊतएकाम् | २. १. ३७ | १८,६६२,७१४,८०७,९८९ |
| एना | ५२२ २ ४ ५<br>एनावोअग्निनामसा | २. १. ८ | ६१८ |

| | | | |
|---|---|---|---|
| ओइत्रिका | २ १ ५<br>ओइत्रिक | १२. १. २७ | ३२२, ११०१ |
| ओवान् | १ २ ४<br>ओऽ२३४या. ओऽ५वाऽ६५६. | १.२.४, ११.१.३५ | १८९, २८६ |
| ओहा | न २<br>ओऽ३हाऽ३ | ८. २. २२ | ३०३ |
| कइत् | १ १ ५२२<br>काईऽ२दाऽ२३४औहोवा | १०. २. ८ | ११७२ |
| कयाग्ना | १ २<br>कयाऽ२३ग्नाइ | ५. १. २५ | ७० |
| कयास्थिरा | १ २ ४<br>कयाऽ३स्थाऽ५इराऽ६५६न् | १. १. २२ | २८६, ३५३, ६७८ |
| कार्द्धो | १ ४<br>काऽ२३र्द्धोऽ३ | ३. १. २४ | ५७४ |
| के | २११ २२<br>क्रेयद्दतिः | १६. २. २४ | १४२ |
| गृणी | ४<br>गृणीऽ५मसि | १०. १. ३१ | ३५६, ९२७ |
| गोपा | १ २२ २१<br>गोपातायाऽ२३ | १. २. २० | ९२, ३०० |
| चता | २ १ २<br>चतासुभा- | १. २. २७ | ८१ |

| | | | |
|---|---|---|---|
| चता | २ ५<br>चताऽ३१उवाऽ२३—षुऽ२३४ताम् | १४. २. १ | १२१७ |
| चदक्षसा | १ अ —<br>चादक्षसाऽ२इ. | १. २. २४ | ९५८, ९८४, ९८५ |
| चा | २ १ —<br>मिश्राहोऽ२इ- | १०. २. ६ | ३४७, ५८४, ८११ |
| चा | १ ३ २१ र २ १ १११<br>पूऽ२पाऽ२३४औहोवा—भुवस्सचाऽ२३४५ | ४. २. ७ | १ ३५ |
| चा | १ ३ ५१ र<br>चाऽ२र्माऽ२३४औहोवा | ५. २. ६ | ११७६ |
| चिक्रा | २ ३ ४<br>आचिक्रदाऽ३त्-अचिक्रदाऽ५दे | १४. १. १ | ४४६,६२०,६२१,९२९,९९४ |
| चित्रा | ५ ४ १ २<br>चित्राऽ६ए, ओइ-चित्रइच्छाऽशोऽ१स्तरुणाऽ२३ | २. १. ३६, २. १. ३५ | ८१ |
| च्याव | २१ र १ २<br>च्यावयास-दऽ२सास्पारौ- | ८. १. १९ | ११४८ |
| जह्वा | १ २ २<br>जाह्वाऽ२नात्- | १. १. ७ | ९१,१०४,२९७,३३८,४१<br>४६०, ९५५, ९५६, ९७५ |
| जारा | ४ ५<br>जारा | १. १. २५ | १५, २५, ५३<br>६९,४८२,५८३,६८२,८१०<br>९२४,९२६,१०९५,११४१ |

| | | | |
|---|---|---|---|
| ज्योतिषा | १२ २<br>ज्योतिषाऽ२ | २. १. ३७ | ५२६ |
| ज्योतिः | १ २<br>ज्योतिः | आ. ६. २. ९ | ५००, ५०२ |
| णंक्षणु | ३ २२३ २<br>णंक्षणायता | आ. २. १. १३ | ९३८ |
| णस्या | २ २ ४ २३ँ१ ५<br>कस्यनूनाऽ३म्पाऽ३रीणसि | १. २. २१ | ६८० |
| तद्विविद्ढा | १<br>तद्विविद्ढाइ | १. १. २५ | ४६,२८९,३४२,४६०,४८५<br>६९६, ११०२ |
| तरुता | १ २<br>तरुताऽ३ | ७. २. १७ | ९७० |
| तिपौ | २ ^ १ २<br>तिपौऽसियाम् | १६. १. ३७ | ३० |
| तिस्रा | २ २ १ ५<br>तिस्रोवाचोऽ२३४हाइ | १३. १. ९. | ३९० |
| तंगू | २४ २ ४ ५ ४ २<br>तंगूऽ३र्धाऽ३यासुवर्णरोवा | ३. १. ३१ | ६२६ |
| तुवि | १ २ ३ ५<br>तुवीशुष्मः | १२. १. २७ | ६३२ |
| तूम्पा | २ १ २<br>तूंपावाऽ१याऽ२ | ५. १. १ | ११०४ |

२ ३ १११
नु भवति । अमर्दयाऽ२३४५ ( १.१.२० ) [1]निवस्वभिः ( १९ )
२ र १३ १११ २र१ ३ १११
निदाशुपेऽ२३४५ ( १.२.१५ ) दूत्यंचरन्महेऽ२३४५ ( २.१.३५ )
१र २ ३ १११ २१३ १११
योनिमिन्द्रश्चगच्छथाऽ२३४५ः ( २.२.३१ ) महस्याऽ२३४५ ( ३.१.१२ )
१वि.र १३ १११ २ १२२३ १११
नवेऽ२ धसेऽ२३४५ ( ३.१.१३ ) अग्निराहुताऽ२३४५ः ( ३.२.१८ )
२११२३ १११
शुक्रआहुताऽ२३४५ः ( ३.२.१९ ) होतारंत्वा ( ४२० ) या द्यौताने ।
३ १११
साम्निप्रत्यये ? अपोवसा (५११) [2]द्वितीयस्वरम् ? क्रिनेऽ२३४५ (३.२.१)

ह्नियादीनि । हु साम्नि ॥ ८ ॥

## १९५ [3]आन्तस्थादिः ॥ ९ ॥

२ १११
आकारस्य द्वैधमन्तस्थादिरेव नु भवति । रन्ताऽ३याऽ२३४५
२३२
( ४.२.२६ ) पार्ष्णीहयोः ( १३.१.९,१२ ) निघ्नचानि । ण्यया ( १४.
२३२ २३२ २३१२
१.२९ ) गृणआ ( ११.२.३४ ) ध्वरआ. ( २.१.१७ ) मदाआ ( १६.१.
१६ ) एवमादीनि । आन्तस्थादिः ॥ ९ ॥

## १९६. उदात्तम् ॥ १० ॥

उदात्तं च साम्नि प्रत्यये नीचीभूय नु भवति । अग्निर्नोव ( २२ )
२ १ २ १र २३र २ २३र
उदधिर्निधीऽ१ः ( ४.२.१२ ) आगहियेहिताद्मेऽ१ ( ५.२.१५ ) [4]इषे-

---

1. पियस्पति. ग.
2. द्वितीयं स्वरं क ख
स्वरं ग. न.
3. अन्तस्थादिः ख. ग.
4. इषो वृषे क.
इषो वृषो ग.

वृधेऽ१ ( १३.१.१३ ) महोविशेऽ१ ( ८.२.१२ ) नदीपुराऽ१ ( १६.२.२० ) पतिर्दिवाऽ१: ( १०.२.२६ ) त्वमिच्छसे-युधाऽ१ ( १०.२.३३ ) घसऽ सहाऽ१ ( १३.१.५ ) भिरस्मयूऽ१: ( १४.१.१५ ) ममत्सराऽ१: ( १५. १.२६ ) दीदिहीऽ१ ( १६.१.१ ) वाजीजिगीऽ३ वाऽऽ१ ( १६.२.४ ) सुवृक्तिभिर्नृमादनंभरेऽ२ पुवाऽ१ ( १६.१.१० ) भूपतश्रियेऽ१ (१७.१.१४) सुलेऽ१ ( ६.१.१४ ) [1]महेऽ१ ( १०.१.१० ) वृधेऽ१ (१०.१.९) द्विताऽ१ ( १७.१.२२ ) उपोषु ( ४८७ ) अर्पासोम ( ५०३ ) साग्निप्रत्यये ? तमऽहविः ( ५१२ ) [2]उदात्तम् । क्रिनेऽ२३४५ ( ३.२.१ ) ह्वियादीनि । उदात्तम् ॥ १० ॥

इति नवमो दशकः ॥

---

## १९७. नगप्रथमादिस्पर्शान्तम् ॥ १ ॥

न वर्गप्रथमादिस्पर्शान्तं नु भवति । [3]ऋतून् ( २.१.३६ ) दशीकम् ( १५ ) गोप्पदेष्टट् ( ४.१.३० ) नगप्रथमादिस्पर्शान्तम् ॥ १ ॥

## १९८. णव आर्चिके ॥ २ ॥

णव आर्चिके प्रत्यये नीचीभूय नु भवति । ग्निश्चिकितिः ( ४४७ )

---

1. महे स. न.
2 उदात्त ग. न
3. चित्राः मा ए क. इत्यधिकः
चित्रा ए. ग. ,,
चित्रा ५ ए. ग. ,,

क्वे यथ ( २७१ ) [1]शृपापन ( ४६९ ) इति । अन्वये । णव इति । शंयद्व्वे ( ११५ ) इन्द्राय । संगृभाय ( १६७ ) तं वः ( २३६ ) आर्चिके णव[2] आदीन्यत्रैव । णव आर्चिके ॥ २ ॥

इति नुभावः

## १९९. प्रथमाद्यातृतीयात्स्वरान्तं च ॥ ३ ॥

१ १११
प्रथमाद्यक्षरमातृतीयात्क्रुष्यते स्वरान्तं च भवति । क्निेऽ२३४५
१ १११ १ १११
( ३.२.१ ) [3]ह्वियाऽ२३४५ ( १६.१.८ ) नार्नाऽ२३४५ ( १०.१.३१ )
१ १११ २११ १११ २११
जयताऽ२३४५ ( ११.२.३० ) श्लोकयताऽ२३४५ ( १२.१.१) क्रुपासुवाऽ
१११ २११ १११
ऽ२३४५ः (१२.१.३७) घतीर्नवा २३४५(१३.२.३३) स्वानोअद्रिः (५२९)
२ १ १११ २ १ १११
[4]वर्हिंपि ( १ ) धनाऽ३र्चीऽ२३४५म् ( २.२.११ ) मश्हिऽ३ष्ठाऽ२३४५म्
२ १ १११
( ४.१.३४ ) [5]ससाऽ३मेऽ२३४५ (१.१.३२) प्रभृतीनि । प्रथमाद्यक्षरम् ?
१
अग्निर्नः प्रभृतीनि । तद्विविद्बाड (१.१.२५) साम्नीत्यधिकारः । प्रथमाद्यातृ-तीयात्स्वरान्तं च ॥ ३ ॥

## २००. पशु ॥ ४ ॥

*पशूक्तायाश्च स्वर्यते । [6]आनस्याधिकपञ्चानुगाने ( आ.३.२.१९ )*

महानाम्नीषु ( महा.१.३ ) वैरूपमष्टमे ( आ.१.१.७ ) प्रथमे नेत्यधिकारः ।

---

1. शृपापवा ख
   शृपापमे ग.
2. णवादित्य. ड.
3. पुरोज इत्यधिकः क. ख. ग.
   ह्वियान ख.
4. वर्हिंषीम् ख.
5. समामे ड.
6. आपस्या. ख. आयसाधिक ग.

पशु ॥ ४ ॥

## २०१. [1]ष्ठारे ॥ ५ ॥

ष्ठारे इत्येतौ शब्दौ स्वर्यते। सुतद्रयिष्ठाऽ२३४५ः ( ४.२.११ ) सहोरयिऽ३ष्ठाऽ२३४५ः ( १३.१.४. ) [2]रेवतीर्नोऽन्त्ये ( आ.२.१.१८ ) ष्ठारे ॥ ५ ॥

## २०२. डादेशः ॥ ६ ॥

इडा.चेदादेशो न स्वर्यते। पदस्तोमेषु ( आ.१.२.२५,२६,२८ ) अङ्गिरसां व्रतद्वितीये ( आ. ४.२.२. ) इलान्दे च ( आ. ५.१.२ ) आदेश इति ? [3]वण्म ( आ.२.१.१२ ) पशूक्ता ? कश्यपदशानुगाने (आ ५.२.११–१५ ) डादेशः ॥ ६ ॥

## २०३. दुधा ॥ ७ ॥

दुधायाश्च स्वर्यते। अपाद्विरित्यत्र ( ४.२.१ ) दुधाया इति ? एऽ३-अपोवसा। साम्नीत्यधिकारः। दुधा ॥ ७ ॥

## २०४. किनि हावति ॥ ८ ॥

ककारिणि साम्नि हावति गीते स्वर्यते। अग्ने ( ३९ ) वयमुत्वा ( ४०८ ) येते पं ( १७२ ) प्रतेधा ( ५३४ ) [4]इत्येतास्वृक्षु। ककारिणि ?

---

1. क्यारे क.
2. रेवतीर्नेन्त्ये ग.
   रेवतीर्नोऽन्त्ये ग.
3. वट्ट क.
   वण्य ग.
4. अन्त्ये पाठः। सोमसंस्थावासिष्ठेपुतास्वृक्षु क.

अग्निसोमा ( ५१८ ) हावति ? स्वव्रषभो ( १४२ ) अक्रान् ( ५२९ ) अग्नेत्रा ( ४२ ) उत्ती । त्वामिद्धि ( २३४ ) गिरिष्ठाः (४७३) स्तोभात्पर-स्येत्यधिकारः । परिस्तोता ( २६१ ) कनिक्रन्ति ( ५३० ) [1]प्रथमाद्यक्षर-मित्यधिकारः । किनि हावति ॥ ८ ॥

## २०५. [2]यिवत् ॥ ९ ॥

यिवदक्षरं स्वर्यते । त्रमर्द्याऽ२३४५ ( १.१.२० ) [3]अयासियाऽ२३४५ः (१४.१.१८) प्रभृतीनि । यिवत् ? अग्निर्नः प्रभृतीनि । यिवत् ॥९॥

## २०६. [4]तक् ॥ १० ॥

तक्शब्दादिन्यां स्वर्यते । तक्षद्दी ( ५३७ ) अन्वये । सिद्धग्रहणात्कर्षणप्राप्तानां निवृत्तिः । इन्द्रं विश्वा ( ३४३ ) हीऽ३वीऽ२३४५ (१.१.२) ओजस्तदादीनि । भाष्यम् । गोष्ठेषु प्रतिसामविधिः । सोमशङ्खानयामिष्टेनुस्वार [5]परिस्वारौ प्रतिषेध्यौ । तक् ॥ १० ॥

इति दशमो दशकः ॥

इति सामतन्त्रभाष्ये[6] द्वितीयः प्रपाठकः ॥

---

1. प्रथमाद्यक्षरादि क. ख. घ.
2. पिवत् ङ.
3. ह्याप्रभृतीनि ङ.
4. तत् ख. घ.
5. प्रतिस्वारौ ङ.
6. सामतन्त्रे क. ख. ग. घ. ङ.

## अथ तृतीयः प्रपाठकः ॥

### २०७. [1]हुइ् ॥ १ ॥

हुइ्इत्येतत्स्वर्यते । पितापुत्रेभ्यः ( २५९ ) उदुत्ये ( २५१ ) प्रयोमहे ( ३२८ ) इन्द्रं विश्वाः ( ३४३ ) प्रथमेनेत्यधिकारः । हुइ् ॥ १ ॥

### २०८. उत्तुयुग्वा ॥ २ ॥

[2]पर्वान्तयुक्तो वाशब्दः स्वर्यते । अच्छऽ२उ-वाऽ३४५ ( १६.१.५ ) पिमाऽ२उ-वाऽ३४५ ( १६.२.२२. ) नोधियाऽ३२ उवाऽ३४५ ( १६.२.९ ) हाउहोवा हाउ वा । आदित्प्रत्न ( २० ) अहमिद्धि ( १५२ ) जगृह्णाते ( ३१७ ) अभित्यंदे ( ४६४ ) इन्द्रोमदायाम् ( ४११ ) [3]यस्यास्तृतीयायामुपपद्यते तस्याः स्वर आर्चिकपरेऽनन्तरस्वरे च प्रतिषेधः । ऊर्ध्वायस्य ( ४६४ ) [4]मशाउवा । [5]शंमध्यमाऽ३१ उवाऽ२३ ( १७.२.७ ) [6]न्वेयोवसु प्रत्यये च । इन्द्रोनाम ( ४३८ ) प्रभृतीनि । एषब्रह्म ( ४३८ ) [7]इन्दा उवाऽ३ (१६.१.४) गोन्योघाः ( ५४० ) अन्वये । उत्तुयुग्वा ॥ २ ॥

### २०९. चतुर्थात् ॥ ३ ॥

चतुर्थाच्च परं स्वर्यते । [8]औंहोऽ३वाऽ३४५ ( १५.२.१७ ) [9]प्रथम-

---

1. हुम् ख.
   हिम् घ.
2. पान्तयुक्तः ग. घ.
3. तृतीयादु ङ.
   तृतीयस्वर उपपद्यते ख.
4. मशा क. ग. घ. न.
5. शंमध्यमा ङ. न.
6. न्वेयोरस्वेप्र० ख.
7. इन्दाउवा. ङ.
8. ङ. पु. वारद्वमनुल्लिखितम्.
9. औं होऽ६ वा इत्यधिकः क.

द्वितीयावित्यधिकारः । चतुर्थात् ॥ ३ ॥

## २१०. रणंधिनि ॥ ४ ॥

रणंधिनि च साम्नि स्वर्यते । त्वऽहत्यायाम् (३२६) रणंधिनि ॥४॥

## २११. रन्यादिन्याऽहि ॥ ५ ॥

[1]यायोरन्यादिन्यामृचि हिप्रत्यये स्वर्यते । अपघ्नन् ( ५१० ) पुरुपगतौ च ( आ.२.१,३४ ) रन्यादिन्याऽहि ॥ ५ ॥

## २१२. धारं वि ॥ ६ ॥

धारमित्यस्यान्तं विभवति । सहस्रधारं (५८१) [2]स्वरग्रहणादुद्धातः । [3]पर्वान्तयुक्तमित्यधिकारः । धारं वि ॥ ६ ॥

## २१३. रुह्वास्तंयन् ॥ ७ ॥

रुह्वास्तंयन्नित्येतौ वि भवतः । सुवितऽ३म् ( ८.२.६ ) तुरयऽ३ ( ९.१.९ ) रुह्वास्तंयन् ॥ ७ ॥

## २१४. हऽसेर्मिन्मेसप् ॥ ८ ॥

हऽसियाया मिन्भवतः[4] मेसो अप् इत्येतौ शब्दौ । यस्तोमे (१८८) दधन्वाँ यो नर्यः ( ५१२ ) हऽसेर्मिन्मेसप् ॥ ८ ॥

---

1. यायोरन्यामृचि क. ख. ग.
2. स्वरमहणमुद्धातः ख. ग.
3. पर्वान्तं इत्यधि० ग.
4. भवति. क. ख. ग. घ. ङ.

## २१५. आसु प्रथमात् ॥ ९ ॥

आसुशब्दः प्रथमात्परो [1]मिन्भवति । अयासः ( ४९१ ) पिनासु ( १२४ ) प्रथमादिति ? अयासियाऽ२३४५ ( १४.१.१८,१९ ) द्वितीय इत्यधिकारः । मागायतायां वा । आसु प्रथमात् ॥ ९ ॥

(अयासियाऽ२३४५ के ऊपर मुद्रित अंक: २१२२३ १११)

## २१६. [2]श्रोद्धतम् ॥ १० ॥

[3]श्रलिङ्गे साम्नि [4]उद्धतमक्षरं मिन्भवति । तमृम्वसम् ( २४३ ) अरङ्गमा ( ३५२ ) श्रलिङ्गे ? कार्म्मन् ( ४९० ) उद्धतम् ? निपश्चितः ( २५० ) श्रोद्धतम् ॥ १० ॥

इति प्रथमो दशकः ॥

---

## २१७. तालव्यादेर्म[5] ॥ १ ॥

तालव्यादेर्गीतस्य मशब्दो मिन्भवति । चित्रश्राधः ( ४० ) ज्येष्ठममर्त्यम् ( ३४४ ) शंमध्यमम् ( ५७९ ) तालव्यादेः ? स्तोवारमित् ( ३१,२५४ ) [6]मशब्दग्रहणम् ? यस्मंमि ( २८९ ) इन्द्रायसा ( ३८८ ) शुंमघरन्[7] ( ८१.१९ ) [8]दन्त्ये वा । तालव्यादेर्म ॥ १ ॥

---

1 मिन्निति यत्र यत्र पाठस्तत्र तत्र मिन् इत्येव पाठो ग पुस्तके दृश्यते। अत इतः परं पाठान्तरत्वेन स नोल्लिख्यते।

2. श्रोद्धतम् ग श्रोद्ध तम् ङ

3 श्रशान्तलिङ्गे ङ

4 उद्धतं ग

5. मन् घ

6 मिच्छब्द. ग.

7. मघवा क ग.

8 तन्त्ये या ख

## २१८. ऊष्मणीद्वाह्ये ॥ २ ॥

ऊष्मणि प्रत्यये इद्वाह्ये पर्वणि मिन्भवति । इन्द्रऽसखा ( २३७ ) अभ्यर्प ( ५७६ ? ) सोमस्सहइ ( ५४० ) ऊष्मणि ? विवस्वभिः ( १९ ) हिन्वन्तू ( ५७० ) [1]इद्वाह्ये ? पवस्वसो ( ४२९ ) ऊष्मणीद्वाह्ये ॥ २ ॥

## २१९. उणो वयु ॥ ३ ॥

गीतादेः परं वयुलिङ्गे पर्वणि मिन्भवति । प्रवयम् ( ३५ ) प्रवयाम् ( ७३ ) अवयहा ( ३१५ ) उण् इति ? अत्रैव । वयुलिङ्गे ? पवस्वसो ( ४२९ ) गीतादेरित्यधिकारः । उणो वयु ॥ ३ ॥

## २२०. अप्तुरं नावताघ्रु जि[2] ॥ ४ ॥

१ २ १ १ २ १ वि.१ १ वि.१ —
अश्वंनस्तोममप्तुराऽ२म् ( १७.२.१० ) नावाऽ२- तऊऽ२घ-
२ १वि.१ १ २
भाइः ( १६.२.३० ) नावताघ्रु इत्येतत् । जि स्वरम्–अग्नयेऽ२ मरताऽ३
१
वृहाऽ२३त् ( ३.१.१४ ) अप्तुरं नावताघ्रु जि ॥ ४ ॥

## २२१. दीर्घम् ॥ ५ ॥

२ १ २
दीर्घमक्षरं भिन्मवति । [3]प्रथमादुद्धत्तमिति प्रकृतम् । द्रविणस्युविप-
१ वि.२ १वि १ २ १ वि.१
न्यपाऽ२ ( १.१.६ ) [4]मयोऽ२० ( १.१.२२ ) अग्निर्नोऽ२० ( १.२.४ )

---

1. इदं याह्ये. क.
2. युजि स. ग.
3. उद्धतम्. स.
4. मधो. स.

२ १ वि र　　२ १२ वि र　　२ १ वि.र
[1]अग्नि वोऽ२० ( २.२.२७ ) [2]न ज्यायोऽ२० ( ५.२.३० ) यंमरुतोऽ२०
२ २ १वि.र　　१वि.र
( ५.२.३३ ) सत्राजितोऽ२० ( ७.१.७. ) रज[3] । तानाऽ२मु० ( ६.१.१८ )
१२वि.र　१२　　२२१वि र　　२ १ वि र
वाजेऽ२मिर्मा० ( ६.१.१९ ) [4]आपिर्नोऽ२० ( ६.२.१४ ) मघवाऽ२०
२२ १वि र　　१ वि र　　१ वि र
( ६.१.३१ ) [5]धेनवोऽ२० ( ६.१.३३ ) चराऽ२० ( ७.१.१० ) भवाऽ२
१ वि र　　१ वि र　　२२ १ वि र
( ७.१.२७ ) पिराऽ२ ( १०.२.७ ) नदीऽ२० ( ७.२.६ ) सोम्यानाऽ२म्
१वि.र　　१ वि र
( ७.२.२० ) [6]मिमाऽ२० ( ७.२.२७ ) शिरोऽ२ज्ञि० ( ७.२.३० )
१ वि र　　१ वि.र　　१ वि र
निरीऽ२० ( ८.२.३५ ) मिश्लोऽ२० ( ८.१.८,९ ) [7]आइन्द्रोऽ२०
२ १ २ वि र　　१वि.र
( ८.१.१० ) हुवेगाय ( २९५ ) सुतस्सोमोऽ२० (८.१.२७) [8]सदाऽ२०
१वि र　२ १　　२ १२
( ८.१.२८,३४ ) उपोऽ२नूनंयु ( ८.१.२९ ) [9]वघ्नि । मघानि-
२ १वि र　　१२२ १वि.र　　२ १वि र
मघनाऽ२० ( ९.१.५,६. ) ज्येष्ठममाऽ२० ( ९.१.२४ ) विम्बीराऽ२०
२ १वि र　　१वि र
( ९.२.३० ) अजरेऽ२० ( १०.१.२१ ) यद्वाऽ२घ० ( १०.२.३ )
१वि र　२　१　　१वि.र　　१वि.र
पिनाऽ२ति सोम्यम् ( १०.२.७ ) इन्द्राऽ२य० ( १०.२.१ ) विप्राऽ२य०
१ १वि र　१वि र　　१वि.र
( १०.२.११ ) मक्षक्तेर विपश्चितेऽ२ (१०.२.१०,११) [10]दिवोऽ२ ( १०.
२ १२वि र　　२ १वि र　　१ वि र
२.२३ ) शुधेदाऽ२० ( १०.२.३३ ) धृष्णवेऽ२ ( ११.१.२८ ) अग्नयेऽ२०

---

1. अग्निरो ग. न
2. न ज्यमाः क.
3. रञ्ज क. ग
4. पिसमि ग
   जाइर्नो क
5. येनवा ख
6. समा. ख.
7. हेन्द्रो. ख.
8. वस्सदा. ख.
9. पच क.
10. दिवो घ न

(३.१.२३) [1]नवेऽ२० (३.१.१३) नवोऽ२ (११.१.३२,३३) समिद्वीऽ२० (११.२.१) मनोऽ२द० (११.२.६) रणाऽ२गावाऽ२नय (११.२.६) दाइवाऽ२सो० (११.२.१०) पिवादेऽ२वानाऽ२म् (११.२.२०) [2]क्रोवा (४३०) अवयद्दा (३१५) हवाऽ२ (५.१.७) मदाऽ२ यवर्हिणाऽ२ गिरा० (१३.२.१८) सोमोऽ२यः (१४.२.१०;१७.२.२५) नर्योऽ२ प्सु[3] (१४.२.१०) भीरवीऽ२नाम् (१४.२.२५) भरेऽ२० (१६.१.१०) अर्कोदेवानाऽ२म्परमेवियोऽ२माऽ२३४५न् (१६.२.३४) [4]अर्कस्य देवाः परमेवियोऽ२माऽ२३४५न् (१६.२.३५) प्रगाऽ२यत (१७.१.१५) भिगाऽ२यत (१७.१.१८) योराऽ२यामाऽ२नेतायइद्दाऽ२नाऽ३म् (१७.२.२४) उचीभूतम् १ नरमा (१०.२.८) नप्त्योवोर्हितः (१३.१.३८) गेः परम् १ दिवोदासायरन्धयन् (१०.२.२२) [5]हवञ्ञिणम् (२७२) दीर्घम् १ नो अर्पसि (५११) तो अक्षरन् (५४७) दीर्घम् ॥ ५ ॥

२२२. यः ॥ ६ ॥

[6]य शब्दश्च भिन्नभवति । अस्मेरायाऽ२ उतश्रवा२३४५ः (१२.२.२६) यः ॥ ६ ॥

---

1. नवो. क. ख. ग. घ. न प्लुभिर्वा. ङ.
2. वेता. ख.
3. नर्योप्सु. क. ण भीर. घ.
4. क. न. ख. न.
5. हवञ्ञिणाइ क. ग.
6. यशब्द क. ख. ग. घ.

## २२३. [1]रेफि तृतीयं श्राष्टि[2] ॥ ७ ॥

रेफिणस्तृतीयस्य द्वैधं श्राष्टि इदमेव भिन्नवति । स्यविश्राऽ२ष्टिम् ( १२,१,३८ ) निवृत्तानि । स्याअरातेऽ३ः ( १,१,१२ ) सुवीराभिः ( ३,१,३० ) याइन्द्रेण ( ११,१,१६ ) तृतीयम् ? चरामसि (१०,१,१२) निरीरमन् ( २८४ ) [3]रेफि ? अग्निर्नः ( २२ ) रेफि तृतीयं श्राष्टि[4] ॥७॥

## २२४. मागात्र्यक्षरिणो वि वचु ॥ ८ ॥

मागास्वरस्य [5]त्र्यक्षरिणो द्वैधं विनिगीते वकारादि वा [6]भिन्नवति । यद्वाघ ( ३८४ ) पिबाऽरतिसोम्यम् ( १०,२,७ ) त्रिशाऽ२य ( ७,२,११ ) मदाऽ२य ( १३,२ १८ ) भाव्यम् वावा ( ९३ ) निवृत्तानि । मनोयमत् ( १,१,१६ ) पुरूवसो । गिरोत्रर्धन्तु ( २५० ) हरीणाम्० ( ९,१,४ ) वाजे-वाजे ( ५,१,६ ) अधानः ( ३६६ ) शुंमघवन् ( ८,१,१९ ) चरामसि ( ३७३ ) गृणानः ( १ )। [7]यएकइत् ( आ.२.१.१४ ) विश्वासाम् ( १५४;२७३ ) सपूर्व्यः ( ३७२ ) ईशानः ( ३८९ ) वसोर्मन्दादीनि । मागास्वरस्येति ? विचासति ( २६४ ? ) चरामसि ( ३७३ ) [8]त्र्यक्षरिणः ? दिवोदासाय ( ३९२ ) सिंमापुरू ( २८० ) मागा त्र्यक्षरणो वि वचु ॥ ८ ॥

---

1. श्रापु. ख. घ. ङ.
2. रेफि. मै. पु.
3. त्रप्यग्निः क. ख, तुल्यः ग.
4. श्रापु. ख. घ. ङ,
5. अत्र्यक्षीरणः क. अक्षरिणः ङ.
6. अधानः ङ.
7. सवा इति क.ग.घ. अधिकः पाठः
8. अत्र्यक्षरिणः ग. ङ.

## २२५. नै पिनविनि ॥ ९ ॥

न एकारः [1]पिनिर्नः विनिगीते मिन्भवति[2]। धिविष्टपे ( ५१८ ) रत्नवेअपस्वानम् ( ५४५ ) अकोदि ( १६.२.३४ ) अव्यावारे (५८४) एकार इति ? अत्रैव । पिनि (नः ?) सुवृक्तिभिर्नृ० (१६.१.१०) [3]विनि ? धिविष्टपे ( ५१८ ) वाजे ( १६३ ) नैपिनविनि ॥ ९ ॥

## २२६. रा ॥ १० ॥

राशब्दे [4]च न मिन्भवति । चन्द्रद्वारा ( २.२.१६. ) जिह्वयारा ( ७.२.३० ) प्रनोरा ( ३.२.२० ) राशब्द इति ? निरीऽररमन् (७.२.३५) सहस्रधारम् ( ५८१ ) [5]नोदात्तवद्वृत्तम् । रा ॥ १० ॥

इति द्वितीयो दशकः ॥

---

## २२७. [6]स चु ॥ १ ॥

सकारादि न मिन्भवति[7] । [8]वासोर्मन्दा ( ६.१.३३ ) वाह्वनि० ( ७.२.५ ) प्रास्था ( ११.१.१. ) यात्सोमेऽर० ( ५.२.१३ ) मत्सरासः ( ५१८ ) स चु ॥ १ ॥

---

1. यिनिना. क. पितिन्ऽवि. ड.
2. भरति क. न.
3. विनि ग. न.
4. च रा. न.
5. नोत्तवद्वृत्तम् ग.
6. भरति ग. न.
7. वसोर्मन्दा ख.
8. सतु. ड.

## २२८. यघोपे ॥ २ ॥

ईकारोऽघोपे न मिन्मवति । [1]अपीपे ( २७२ ) परीतः ( ५१२ ) सुप्रीतः ( ११४ ) रार्यईशे ( ६० ) ईकारः । यात्सोमेऽरसो ( ५.२.१३ ) अघोपे । [2]स्माइन्वाऽरजिनीऽरवसु–भाः[3] (१५.२.२६.) आरेअस्मन्निरीऽर रमन्[4] ( ७.२.३५ ) यघोपे ॥ २ ॥

## २२९. नाञु चवर्गि ॥ ३ ॥

[5]नापदान्तवति गीते चवर्गि मिन्मवति । [6]आर्चादेवा ( २.२.२८; २९. ) [7]वाजानाऽसत्० (९.१.२१) अपदान्तवति । वाजेऽरभिर्मा ( ६.१. १९ ) यनिर्णिजेऽर ( १६.१.३४ ) माध्वारजाऽरसि० (६.१.१२) [8]आदेः परमित्यधिकारः । नाञु चवर्गि ॥ ३ ॥

## २३०. णयुक् ॥ ४ ॥

णयुक्तं च न मिन्मवति । प्रणेतऽ३ः ( ५.२.१९ ) हरीणाऽ३म् ( ५.२.१९ ) णयुक् ॥ ४ ॥

॥ इति मिन्माधः ॥

---

1. अपीये ग.
2. स्माइन्वाजी घ. न.
3. वसुभाः ख.
4. रमत् ग.
5. न पदान्तवति. ग.
6. अर्चादेवा. ड.
7. याजेवाजानाम् ख. ड.
8. अपादेः पर. ड.

## २३१. आतृतीयाच्चतुर्थे ॥ ५ ॥

आतृतीयात्क्रुष्यते चतुर्थे प्रत्यये। सहस्रधारम् (५८१) [1]सन्तनिनि (१७.२.३२) आतृतीयाचतुर्थे ॥ ५ ॥

## २३२. से सि ॥ ६ ॥

सेशब्दः सिप्रत्यये क्रुष्यते। सत्श्रवसेऽ२ (७.१.२१) विश्रवसेऽ३ (७.१.२१) [2]सत्यश्रवसेऽ३ (७.१.२१) सिप्रत्यये १ श्रवसेऽ२३४५ (७.१.२२) से सि ॥ ६ ॥

## २३३. जि दीर्घं मन्द्रान्ते ॥ ७ ॥

मन्द्रान्ते प्रत्यये क्रुष्यते जिदीर्घम्। [3]उचीभूतमित्यधिकारः। महामपारम् (३३५) द्विः। नयज्ञैः (५६८) [4]प्णागर्मा (३८०) मरुत्वते (४७२) द्युमत्तमः (४७२) नेता य इद्यानाम् (५८२) [5]विशद्धरिः (५१३) [6]अर्हंजियाऽ२३ (८.१.२८) ण्यव्यया (५१३) [7]पितादे (४२९) [8]ओजसे (११) अमृतम् (३५) मन्द्रान्ते १ स्याअरातेः (१.१.१२) प्रभृतीनि। जिदीर्घमुचीभूतमित्यधिकारः। वाजपतिः (६.१.१८) [9]त्वंपुष्यमि (२७०) जि दीर्घं मन्द्रान्ते ॥ ७ ॥

---

1. संतनिनि ग
2. सत्य श्रवसे ग. न.
3. उद्यमित्य० रा.
4. प्णागाहा क. रा. प्णारगा. ग. कृष्णागर्मा ह
5. विशेढरिः घ.
6. अर्हंजिया ड.
7. वितादे ग.
8. तुंजसे ड.
9. तत्रपुष्यसि क

## २३४. ते वर्हायाम् ॥ ८ ॥

तेशब्दो वर्हायां क्रुष्यते । [1]विधते तनूपाः ( ७७ ) निवृत्तानि । अग्निर्नः ( २२ ) चन्दद्वीरा ( ३६० ) अभिविश्वाः ( ३११ ) वर्हादीनि । ते वर्हायाम् ॥ ८ ॥

## २३५. भे वृद्धपरे ॥ ९ ॥

स्तोमे वृद्धपरेऽक्षरे प्रत्यये क्रुष्यते । अग्निमन्वारमामहेऽ३ ( ३.१.१ ) [2]हवामाहेऽ३ ( ११.१.२४ ) गमेम ( २०९ ) [3]वाजेऽ२ भिर्महिणीयथाऽ३ः ( ६.१.१९ ) महाँ इव ( २२७ ) म्यआतुदाऽ३ः ( ६.२.२२ ) अर्वागिदम् ( २९० ) त्वावतः ( १९३ ) आनोमित्रा[4] ( २२० ) पवित्रन्ते ( ५६५ ) द्युम्नमस्मभ्यम् (८१) रायेपनीऽ२ यसेऽ३ ( २.२.१९ ) क्रतुवित्तमः ( ५७८ ) [5]रजस्तुराऽ२३म्–होइ ( १७.२.१३ ) वृद्धपरे ? [6]चित्तगवे । [7]परीतायाम् ( ५१२ ) जि दीर्घमुचीभूतमित्यधिकारः । विपन्यया ( ४ ) अतिह्वाऽ३सि ( ५७६ ) [8]नावीत्यधिकारः । भाष्यम् । अनि । भे वृद्धपरे ॥ ९ ॥

---

1. विधत्ते घ.
2. हवामाहे ग. न.
3. वाजेभिः घ. ड. न.
4. अनोमित्रा ग.
5. राजस्तुरम् ग.
6. चित्रगवे. ख. चित्रगवे ड.
7. परीतायाः ख.
8. नावित्य. ख. नोवीत्य. ग.

## २३६. णा ॥ १० ॥

णावत्यामृचि कृष्यते । त्वावतः ( १९२ ) [1]आनोमित्रावरुणा ( २२०) णा ॥ १० ॥

इति तृतीयो दशकः ॥

---

## २३७. हावतोः सः ॥ १ ॥

हायतोरक्षरयोर्द्वैधं [2]सशब्द एव कृष्यते । [3]नमन्धसाऽ३ः ( ६. १.३३ ) निवृत्तानि । होतामन्द्रः ( १०० ) घृणीमहे ( ५९ ) द्युमन्तं त्वा ( ४८० ) धियादधे ( ४६१ ) हावतोः सः ॥ १ ॥

## २३८. गतृतीयात् ॥ २ ॥

[4]वर्गतृतीयात्परं कृष्यते । प्वन्धृजन ( ५४० ) [5]व्यस्वदयन्निति । ( ५६९ १ ) [6]गतृतीयादिति । वाजपतिः ( ६.१.१८ ) गतृतीयात् ॥ २ ॥

## २३९. गिनि स्वरान्वाह्ययुक् ॥ ३ ॥

गिनि स्वरान्तस्य पर्वणो वाह्ययुक्तं कृष्यते । अद्राऽ३गाराऽ२३४५ः ( १.१.२२. ) तुकाऽ३रवाऽ२३४५ः ( ४.२.२८ ) [7]द्रिचोऽ३द्रियाऽ२-

---

1. आनोमित्रा घ. रु ग
2. स्युशब्दः क.
3. नमन्धसः घ. ड.
4. वर्गतृतीयात् घ. न
5. वैस्वदयन्तीति. रु.
6. वर्गसृतीयादिति रु
7. द्रिवोद्रियाः क

१११ २ २ २१११
३४५ः ( १०.१.५ ) [1]द्विवइहो॒ऽ३इ२१ ( १०.१.४ ) दक्षादीनि । वाजी-
२
जिगी॒ऽ३० ( १५.१.१३;१६.२.४. ) [2]गिविस्वरान्तस्य ? दशीकम् ( १५ )
वाह्ययुक्तम् ? सुवृक्तिभिः ( ३७७ ) [3]दीर्घादिति ? [4]वयुंजनम् ( ४९२ )
२११ ३१२
पितादे ( ४२९ ) साम्नीत्यधिकारः । [5]ऐहीयैही॒ऽ१प्रभृतीनि । उत्तरदीर्घ-
त्वम् । गिविस्वरान्वाह्ययुक् ॥ ३ ॥

२४०. शूक्तायाम् ॥ ४ ॥

पशूक्तायां च क्रुष्यते । [6]वैरूपान्तरिक्षयोः ( आ.१.१.१;१.१.९ )
कश्यपग्रीवायाम् ( आ.५.२.१२. ) हृदये ( आ.५.२.१५ ) जि [7]दीर्घमुची-
भूतमिति । देवस्थानादीनि ( आ.१.१.१५ ) शूक्तायाम् ॥ ४ ॥

२४१. [8]हि ॥ ५ ॥

हकारे प्रत्यये क्रुष्यते । देवस्थाने ( आ.१.१.१५ ) [9]क्रुष्यसाम्नि
( आ.५.१.२२ ? ) [10]द्यौगतयोः (आ.३.१.१:२) वार्कजम्भे (आ.३.१.२७)
हृदये ( आ. ५.२.१५ ? ) घर्मरोचने ( आ.६.२.१० ) [11]पतिलिङ्गे
प्रतिषेधः ॥ हि ॥ ५ ॥

1. द्रिवइयोर् ड.
2. गीधि. ख.
3. दीर्घो दीर्घादिति. ग.
4. वयुजानम्. ड.
5. ऐहीयेप्र. ग.
6. वैयूपा. ग.
7. दीर्घभूतमुची. ग.
8. ह. घ.
9. शत्तयसाम्नि. ड.
10. द्वैगतयोः घ.
द्वैगतयोः घ.
11. प्रतिलिङ्गेः क.
प्रलिङ्गे. ख.
प्रसङ्गे. ड.

## २४२. [1]आचतुर्थाद्धौ ॥ ६ ॥

आचतुर्थात्कृप्यते [2]मन्द्रे प्रत्यये । ओजस्तदादीनि ( ५.२.५ ) [3]विश्रामिधामाऽ२३४ ( ११.२.२० ) आचतुर्थाद्धौ ॥ ६ ॥

## २४३. [4]डिगोऽस्तो ॥ ७ ॥

तृतीयोचस्यामो इत्येतत्कृप्यते । अयन्तइन्द्रसोऽ४मः ( ४.२.३२ ) [5]अमो इति ? अस्तिसोमोअयश्मुतः ( ५.१.३१ ) डिगोऽस्मो ॥ ७ ॥

## २४४. अग्रिवतः ॥ ८ ॥

अग्रिवतः पर्वणः कृप्यते । तेऽ४पाम् ( ६.१.४ ) आऽ४न्ते ( १०.१.३२ ) पाऽ५न्तम् ( ४.२.१८ ) यदाऽ४क–दा० (८.१.७) [6]ताऽ४खायः (१०.२.१७) आऽ४हर्य ता० (१६.१.३७.) यज्ञपरिसंयातयोः । अग्रिमतः ॥

## २४५. [7]नाशु सणत्तु ॥ ९ ॥

न कृप्यते आशु मणादेः पर्वणः । प्रत्यग्ने ( ३.१.६ ) प्रत्यस्मै० ( ९.२.१३ ) त्वामिदा ( ८.१.२३ ) आजिपा ( १०.२.१७ ) भूयदन् ( ८.१.२१ ) पर्वैकत्वात् । नाशु मणत्तु ॥ ९ ॥

---

1. आचतुर्थादर्शौ ष
 आचतुर्थाद्धौ रर. ग.
2. मन्द्रप्रत्यये ष.
3. विश्रामिधाय. रर. ह.
4. डिगिमो. ष.
5. अमोम इति ह.
6. मगायः ष. रर. ह.
7. यारद्वयं लिखितं ष. पुस्तके ।
 नाशुमंगत्तु ह.
 नाशुभिन्न त्तु ष.

## २४६. [1]शतारे ॥ १० ॥

[2]शतापरे चाक्षरे प्रत्यये न कृष्यते । अग्निमी ( २.१.१६. ) पासस्चे ( १२.१.२८ ) शतारे ॥ १० ॥

इति चतुर्थो दशकः ॥

---

## २४७. तमीय वस ॥ १ ॥

तमु, ताऽ४मूवमी ( १०.१.२८ ) तमु, ईय । ईऽ४यइया[3] (९.१.२) ईय । वसन्त इन्नुरन्त्य इति रहस्ये ( आ.५.१.९ ) तमीयवस ॥ १ ॥

## २४८. दि वी उणि ॥ २ ॥

दि वी आपद्यते [4]उणि प्रत्यये । तक्षयदि ( १५.२.२२ ) [5]जुष्ट्म्पतिम् ( १५.२.२२ ) मघवानोजना ( १.२.३१ ) आविशन्कलशम् (१३.२.२५ ) ईऽ४यइया ( ९.१.२ ) प्रसोमदे ( १४.२.२१ ) [6]स्तित्वा ( ३४५ ) दि वी उणि ॥ २ ॥

## २४९. नीचं मन्द्रं नीचे ॥ ३ ॥

नीचं मन्द्रमापद्यते नीचीभूते प्रत्यये । पाहिनो अग्ने प्रभृतीनि । ( १.२.२८ ) नीचं मन्द्रं नीचे ॥ ३ ॥

---

1. शतोर सूत्रं घ. न.
2. शतारेक्षरे. क.
3. ईम्यच्च इयाइ. ख.
4. उणिप्रभृतितृतीयसूत्रीय प्रत्यये पर्यन्तं घ. न.
5. जष्टंपतिम्. ग.
6. स्तीत्वा ख.

## २५०. दे नीचानाम् ॥ ४ ॥

एकपदे [1]नीचानां तृतीयात्परं मन्द्रमापद्यते । मघवन् ( ३०० ) पनीयसी ( ४१९ ) [2]वियञ्जते ( १६.२.३३ ) एकपदे । प्रसोमदे ( ५१४ ) [3]सोमउप्वा ( ५१५ ) दे नीचानाम् ॥ ४ ॥

## २५१. तृतीयायज्ञे ॥ ५ ॥

तृतीयात्परं[4] यज्ञसंघाते मन्द्रमापद्यते । यज्ञादीनि ( १.२.२५ ) तृतीयायज्ञे ॥ ५ ॥

## २५२. [5]अणुङ्गि ॥ ६ ॥

[6]पदादिः पर्यन्ते मन्द्रमापद्यते । असावि ( ४७३ ) सिन्धुः ( १४.२.२३ ) [7]अग्ने ( ३.१.१८;११.२.२९;१२.१.१५ ) [8]विश्वापरि ( ५७० ) अणुङ्गि ॥ ६ ॥

## २५३. न गप्रथमवु ॥ ७ ॥

न वर्गप्रथमादिर्मन्द्रमापद्यते । तेऽऽपाम् ( ६.१.४ ) ताऽऽन्ते ( १०.

1. नीचान्तानाम्. ग.
2. वियञ्जते ग. न.
3. सोमउप्वा. क. सोम उ. घ.
4. परं ग. न.
5. अणुङ्गि मै. पा.
6. पादादेः ग.
7. अग्ने क. न.
8. विश्वाइत्परि. क. ख. घ.

१.३२ ) पाऽ५न्तम् ( ४.२.१८ ) न गप्रथमत्तु ॥ ७ ॥

॥ इति कर्षणभावः ॥

---

## २५४. [1]त स्मिन् ॥ ८ ॥

त भवति स्मिन्निति । स्माइन्पुरुहूतया ( ७.१.२५ ) त स्मिन् ॥८॥

## २५५. [2]उञ् लघु हौ ॥ ९ ॥

[3]पर्वान्ते लघु हिप्रत्यये वर्धते । स्नुनुश्सत्यस्यसा ( ५.१.२१ ) धस्तन्नोविदा ( ९.१.२८ ) [4]सइन्दवस्सुवा ( १७.१.४ ) आसोतापा ( १७.२.१५ ) ज्येष्ठस्यधा[5] ( १५.२.२२ ) [6]वृपणंयन्तुहा ( १७.१.४ ) समिद्दीदयताइ ( ११.२.२ ) ताऽ४मूवभी ( १०.१.२८ ) [7]हृ्ऽ-आऽ४५ हऽ । लघ्विति ? गोऽ४मन्नः-होइ ( १७.१.३४ ) भद्रोऽ४नः-होइ ( ३.१.३६ ) तक्षयदी-होऽ२३४५इ ( १५.२.२२ ) जुष्टपतिम्-होऽ२३४५इ ( १५.२.२२ ) भूयइत् ( ३०० ) नकिष्टंकर्मणानशत् ( ६.२.२१ ) अग्निमिन्धीतमौ ( २.२.२१ ) धियश्सचेतमौ ( १.१.३३ ) साम्निगुरुत्वान्मशब्दो था प्रतिषेध्यः । पर्वान्तः ( ते ? )। कनिक्रन्तिहा (१५.२.१३) उञ् लघु हौ ॥ ९ ॥

---

1. तस्मिन् सूत्रं घ. न नस्मिन्निति ग. ङ.
2. इञु लघु हौ. ख. इलुलघु यौ ङ.
3. पर्वान्तो ल० ग. ङ.
4. स इन्द्रवस्सुवा. ग.
5. ज्येष्ठास्यधा. ग.
6. वृपणंय हा. ग.
7. हिं आहिम्. घ.

२५६. [1]डाप्सू ॥ १० ॥

डाप्सु इत्येतौ शब्दौ वर्द्धेते । होऽ५इ-डा (१.१.४) [2]अप्सु-दक्षौवा०

( १३.१.२४ ) डाप्सू ॥ १० ॥

॥ इति पञ्चमो दशकः ॥

२५७. चं वृद्धे ॥ १ ॥

नीचमापद्यते उच्चे वृद्धे प्रत्यये । [3]प्सुशब्द इत्यधिकारः । चन्द्रमा

अप्सुवा ( ११.१.३४ ) उच्चे वृद्ध इति ? चन्द्राँहोमाअप्सुवन्तरा-ओऽ६वा

( ११.१.३५ ) चं वृद्धे ॥ १ ॥

२५८. यचु च्चे ॥ २ ॥

यकारादि नीचमापद्यते [4]उच्चे वृद्धे प्रत्यये । यच्छक्रासि ( २६४ )

सुन्वे ( ५८२ ) [5]उच्चे ? त्वे [6]अग्ने ( ३८ ) वृद्धे ? जरितः ( ३९ )

यकारादीनि । यद्वाहिष्ठीयम् । यचुच्चे ॥ २ ॥

२५९. सणचु न वृ[7] ॥ ३ ॥

सणादेर्गीतस्य नीचमापद्यते [8]नवृलिङ्गे [9]पर्वणि । [10]प्रसम्राजम्

---

1. डाप्सू सूत्रं ग. न.
2. आप्सुदक्षो ड.
3. सुशब्दः ग.
4. उच्चैर्वृ० ख.
5. उच्चे ख न.
6. त्वंनोअग्ने. त्वेअग्ने ग. न.
7. वृ ड.
8. न तुलिङ्गे ड
9. पर्वणि इति पाठश्चंदरपते ग. पुस्तके.
10. ग. ड न.

(४.१.३१) स्वादिष्टया (१२.२.२२) द्विः। प्रतुद्रव (५२३) त्वंह्यङ्ग (५८३) सणादेः ? [1]यद्वाहिष्ठम् ( ८६ ) नद्यूलिङ्गे ? ब्रह्मेन्द्रा ( ३९० ) स्वादिसप्तमे ( १२.२.२० ) श्येनोनयो ( ५६२ ) सणचु नद्य् ॥ ३ ॥

## २६०. छाद्विण् ॥ ४ ॥

कृष्टाद्विस्वरं ( रे ? ) गीतादिरुच्चीभवति। चित्रइच्छि ( ६४ ) श्रत्ते ( ३७१ ) एपस्यते ( ५३१ ) न सहस्रादीनि। [2]कृष्टाद्विस्वरं गीतादिरिति ? अत्रैव। तृतीयोच्चस्य [3]भिगहावेपनात्तु ( ? )। छाद्विण् ॥ ४ ॥

## २६१. [4]सात्याः ॥ ५ ॥

सात्याः परमुच्चीभवति। पुरोजि (५४५) अयॅस्सः। गीतादिरिति ? पुनानस्सो ( ५११ ) सात्याः ॥ ५ ॥

## २६२. डि द्वितीयम्[5] ॥ ६ ॥

डिवति पादे द्वितीयमुच्चीभवति[6]। धिश्रुत्कर्ण ( ५० ) अधानोदे ( १४१ ) [7]विश्वानरस्य ( ३६४ ) तरस्विनम् ( ३७० ) डिवति ? [8]त्यमुवः ( १७० ) तंवोद ( २३६ ) प्रत्यस्मै ( ३५२ ) डिद्वितीयम् ॥ ६ ॥

---

1. यद्वाहिष्ठीयम्. ग.
2. कृष्टदिस्य ग.
3. भिगाहसे ग.
4. सत्याः घ.
5. द्वितीयः ग.
6. उच्चं भवति ख.
7. विश्वानारस्य ख. विश्वानस्य ग.
8. भ्यमुपवः ग.

## २६३. अरे तृतीयं च ॥ ७ ॥

अरसङ्ख्यते द्वितीयमुच्चीभवति तृतीयं च । अरमश्वादीनि ( ११८ ) अरे तृतीयं च ॥ ७ ॥

॥ इति षष्ठो दशकः ॥

---

## २६४. [1]न्विस्थात्प्रणतं ज्यः[2] ॥ १ ॥

नुनइस्थात्परस्य पर्वणः द्वितीयस्वरोऽकारः प्रणम्यते । [3]उच्चे वृद्धे इत्यधिकारः । रक्षसः ( ९५ ) प्रणेत३ः ( ५.२.१९ ) स्मसिस्थात२ः ( ५.२.१९ ) मर्त्यः ( २८८ ) नुनइस्थादिति ? गमेम[4] ( २०९ ) हुतंपुनः ( ६.२.२२ ) पयस्य म । इन्द्रायमो ( ५७८ ) प्रणतमिति शब्दः । उच्चे वृद्धे [5]इत्यधिकारः । [6]द्वितीयस्वर इत्युत्तरार्थम् । ईशीयवोत्तरो नु भावः । न्विस्थात्प्रणतं ज्यः ॥ १ ॥

## २६५. जेर्गीतपूर्वात् ॥ २ ॥

द्वितीयाद्गीतपूर्वात्प्रणम्यते । उच्चे वृद्ध इत्यधिकारः । सातौ वा ( २३४ ) च्यावया ( २९८ ) पराशुल्का ( २९१ ) वीदुहिता ( ३०२ )

---

1. न्विस्थात्प्रणतः स.
2. ज्यः स. ग.
3. उच्चैः स. उच्चवृद्धइत्य० ग.
4. गमेमुह्. ग.
5. वृद्धे चेत्य. स.
6. द्वितीयस्वर इत्यतः प्रभृति द्वितीयसूत्रभाष्यगतइत्यधिकारः इति पर्यन्तं स, पुस्तके नास्ति । द्वितीयस्वरम्. ग.

अरिष्टनेमिं ( ३३२ ) द्युमन्तं दे ( ४१९ ) दिवःपृष्ठा ( ९२ ) हृणीथा ( ११० ) रम्मन्ये ( ४६५ ) तेजा[1] ( ४६७ ) [2]उच्चे १ [3]द्रहरिमाइ० ( ६.२.२७ ) वृद्धे १ जनिता ( ३११;५२७ ) [4]जेर्गीतपूर्वादिति १ नामानिया० ( १६.२.४ ) [5]पाजाऽसि ( ५५८ ) कृणुपाइ ( १६.२.१९ ) [6]न वृद्धादित्यधिकारः । आनोमित्रावरुणा ( २२० ) जेर्गीतपूर्वात् ॥ २ ॥

## २६६. वाह्यस्य ॥ ३ ॥

सामवाह्यस्य[7] पर्वणः[8] प्रणम्यते । सोमः प ( ५२७ ) महत्तत्सोमः ( ५४२ ) वाह्यस्य ॥ ३ ॥

## २६७. आदेरवैधस्य[9] ॥ ४ ॥

आदेः परस्य द्वैधं सामवाह्यस्यैव पर्वणः प्रणम्यते [10]अवैधस्य । इन्दुर्वाजी ( ५४० ) सखाय आ ( ५६८ ) बर्हिषि ( १ ) प्रभृतीनि । निवृत्तानि । पिबासोमम् ( २२९ ) [11]मदाय ( ४८५ ) श्रिये (१०१(१) मे गियत्रा ( १ ) द्रिवोऽ२ द्रिवाऽ२३४५ः ( १०.१.५ ) अवैधस्येति । [12]अचो ( ५५५ ) वृषा ( ४६९ ) प्रवौहो वाऽ२ ( ४.२.२२ ) तिस्रोवाचः

1. जा. क. ग. न.
2. उच्चैः ख.
3. इन्द्रहरिमाइः ख. ग.
4. जे क. घ. न
5. याजाऽसि ग.
6. नवृद्धा इत्यधि०-ग.
7. वाह्यस्येव ख. ग.
8. पर्वणः ग. न.
9. सूत्रं ग. न.
10. अवैधस्य. ख. न.
11. मंदाय ग.
12. अवो ग.

( ४७१ ) [1]इन्द्रायेन्दो ( ४७२ ) आदेरवैधस्य ॥ ४ ॥

## २६८. अन्तर्गीतयोः ॥ ५ ॥

अन्तर्गीतयोश्च प्रत्यययोः प्रणम्यते । [2]नाहुषीषु ( १९० ) [3]पुयादीनि । अन्तर्गीतयोः ॥ ५ ॥

## २६९. शौ ॥ ६ ॥

रहस्ये द्वैधमन्तर्गीतयोरेव प्रणम्यते । अग्निर्मूर्धादि० (आ.१.२.७) चर्षणीधृतम् ( आ.२.१.२,२ ) तौरश्रवसे ( आ.३.१.५ ) निवृत्तानि । अर्कतृतीयोपान्त्ये ( आ.१.२.१४ ) प्रवइन्द्राय ( आ.१.२.५,६ ) अभ्रातृव्ये ( आ.२.१.१६ ) प्रततृतीयाद्ये (आ.४.२.१) नाके ( आ.३.२.३ ) भ्राजन्ति ( ६१५ ) उत्तरोभ्युदूहः । शौ ॥ ६ ॥

## २७०. स्थादेः ॥ ७ ॥

अन्तस्थादेरक्षरस्य द्वैधं अन्तर्गीतयोरेव प्रणम्यते । याहिमयूप्रभृतीनि ( ६.२.२७ ) निवृत्तानि । वरिवस्या ( १८६ ) हर । रथीतमम् ( ३४३ ) स्थादेः ॥ ७ ॥

## २७१. अण् ॥ ८ ॥

[4]पदादिर्न प्रणम्यते । उपब्रह्मा ( २६९ ) परमज्या ( २६९ ) पवित्रे

---

1. इन्द्रायेन्दा ङ. (१३.१.१३) ङ.
2. नाहुषीषु प्रभृतिषष्ठसूत्रभाष्य- गतप्रणम्यते पर्यन्तं क. न.
3. ध्रुवादीनि. ग. घ.
4. पादादिः क. ख. घ.

सो ( ४७५ ) अण् ॥ ८ ॥

## २७२. [1]यं णस्य ॥ ९ ॥

[2]यंशब्दो वरुणस्य प्रणम्यते । [3]यंवृत्रेषु ( ३३७ ) सम्मील्यान्तस्य हि ( आ.२.१.२५ १ ) वैराजवाजसाम्नोः[4] ( १.२.२० ) उद्गुब्रह्माणि (अ.४.२.२ ) [5]वार्त्रघ्ने ( आ.४.२.१७ ) अमिप्लुत्यपुच्छे । यं णस्य ॥ ९ ॥

## २७३. दि नु ॥ १० ॥

चतुर्थो नु भवति । उच इत्यधिकारः । हिम्ऽ२३स्थिवाऽ३. ( १७.२.३१ ) काऽ२३र्धीऽ३ ( ३.१.२४ ) तुवान्तू । सवाजेषु ( ४११ ) औहोऽ२३वाऽ३ पाऽ३रीणसि (१.२.२१) दूता० ( १.१.२१ ) तंगूऽ३० (३.१३१) पिवाऽ३. ( ६.२.१२ ) आचतुर्थं कर्पणे च । [6]उच्चे । हिताः ( २.१.२५. ) प्रमित्राय ( २५५ ) अयावीति ( ४९५ ) नावित्यधिकारः ॥ दि नु ॥ १० ॥

॥ इति सप्तमो दशकः ॥

---

## २७४. नोदुह्ये ॥ १ ॥

न उदुह्ये गीते नु भवति [7]प्रस्तावे । हिताः ( २.१.२५ ) घ्वराइ

---

1. अणस्य घ.
2. यशब्दः घ.
3. यंमित्रेषु. ख.
4. साम. ग.
5. वार्त्रघ्नेषु. क. ख. ग. घ.
6. कर्पणेचच्चेनच्चे ख. कर्पणोंचोच्चे. ग.
7. इतः प्रभृति भाष्यं घ, न.

( २.१.१५ ) नृमाह्यः ( ११.१.२३ ) पिणाइ ( १२.१.४ ) तवत्यत् । होर्तिंयास्संघातः । भाष्यम् । स्वाहा विरतं चाविरामात् । देवोवः सन्निकर्षे द्विप्रत्यय इति चेन्नैवं साम्नि । नोद्गुह्ये ॥ १ ॥

## २७५. तृतीये ॥ २ ॥

न तृतीये[1] नुर्भवति । मघोऽ२३४र्नषा ( २.१.६ ) हिष्वा ( ४९ ) [2]ष्वरा । घृतन ( ३७८ ) तृतीयोच्चे च । [3]अपध्वानम् ( ५४५ ) अक्षरे धृत्तिः । तृतीये ॥ २ ॥

## २७६. मन्द्रात् द्वितीयं द्रसदनायाम् ॥ ३ ॥

मन्द्रात् ( मन्द्रः १ ) द्वितीयं प्रत्युत्क्रामति द्रसदनायाम् । अभिप्रियाद्वितीये । ( १६.२.२ ) मन्द्रात् द्वितीयं द्रसदनायाम् ॥ ३ ॥

## २७७. [4]दस्मादिः कुष्टा ॥ ४ ॥

[5]दस्मसंघातस्यादिः कुष्टात्प्रत्युत्क्रामति । दाऽ३२साम् (१.२.२५) शरदः ( ६१६ ) [6]उद्देशो वा । दस्मादिः कुष्टा ॥ ४ ॥

---

1. तृतीयः घ.
2. अक्षरा. घ.
3. अपध्वानाम्. ग.
4. भाष्यसहितमिदं सूत्र वारद्वयमुपलभ्यते. घ. कोशे दसमादिः ख.
5. कुष्टाद्वादसघा. ख.
6. अवदेशो वा. क. वद्देशो. ग.

## २७८. एदोर्हीष्याम्[1] ॥ ५ ॥

एदुसंघातस्य हीष्यां प्रत्यये प्रत्युत्क्रामति । एदुप्रभृतीनि[2] । एदोर्हीष्याम् ॥ ५ ॥

## २७९. वृषावति महि[3] प्रथमम् ॥ ६ ॥

वृषावति साम्नि महि प्रथमं[4] प्रत्युत्क्रामति । अचे सप्तमे (१०.१.७) गायन्तिवत्[5] । वृषावति महि प्रथमम् ॥ ६ ॥

## २८०. ऊनि द्युतां[6] द्विश्च ॥ ७ ॥

ऊनिप्रत्यये द्वितान्तः प्रत्युत्क्रामति । शवा२३१२३ः ( १०.२.१८ ) दिवो२३१२३-इ० ( १७.२.२१ ) ऊनि द्युतां द्विश्च ॥ ७ ॥

## २८१. वाचिरादिस्वरं विस्वरे[7] ॥ ८ ॥

वाचिस्वरे पदादिस्वरं प्रत्युत्क्रामति विस्वरे । नोधिया२३१उ. ( १६.२.७ ) पिमा२उ ( १६.२.२२ ) अच्छ२उ[8] ( १६.१.५ ) घृहा२३१उ ( ६.२.१,४ ) आनीकया२३१उ ( २.२.३० ) मा२नापथा२३१उ ( १६.२.१६. ) सिपुरा२३१उ[9] ( १३.२.२१ ) पर्वता[10] ( ३३८ ) सुम्ने

---

1. एयोहीभ्याम्. ग.
2. एदु प्रभृतीनि. ग.
3. मति. ग.
4. प्रथमः
5. गायन्तवत् ख. ग.
6. द्युताद्विश्च. ख. द्युतान्तश्च. क.
7. सूत्रं भाष्यस्यप्रथमं वाक्यं चक. ख. ग. न.
8. अर्चा क.
9. सिष्ट. ख.
10. धार्वता. ख. यार्यता ख.

( ६१० ) स्ये । [1]उच्चे ? [2]ररोमभाउ ( ६.२.२९ ) विस्वरे ? [3]वसा-औऽ३ होवा ( ४.१.९ ) वाचि ? सऽस्थाऽ३इ ( ११.१.५ ) भाष्यम् । आस्ताऽ ३उवा ( ३.२.२५ ) [4]द्रव अरण्योः । एडु । [5]कुष्ठोऽन्तः । वाचिरादिस्वरं विस्वरे ॥ ८ ॥

## २८२. मान्यां मन्द्रः परिस्वारं नौ ॥ ९ ॥

मान्यां मन्द्रः परिस्वारमापद्यते निधने प्रत्यये । सौमित्रे (१०.२.११) स्वर्वते । अस्मेरा । मान्यां मन्द्रः परिस्वारं नौ ॥ ९ ॥

## २८३. उच्चात् द्रप्से ॥ १० ॥

उच्चात्परं [6]द्रप्ससंघाते परिस्वर्यते । अवद्रप्सः ( ३२३ ) [7]सोमः पवते ( ५२७ ) वावर्तावपि ( ? ) उच्चात् द्रप्से ॥ १० ॥

॥ इत्यष्टमो दशकः ॥

---

## २८४. द्विवतोऽन्त्ये ॥ १ ॥

द्विवतो गीतस्यान्त्ये[8] निधने[9] परिस्वर्यते । युवासखा (४.१.१२) यजिह्वयम् ( ४४५ ) अहये ( ४२९ ) नेतारः ( ५८२ ) सहस्वते ( २१ )

---

1. उच्चैः ख.
2. ररेयताइ ग.
3. वासावौहोवा. ख.
4. रवारण्योः ग.
5. कुयोन्तः ग.
6. द्रप्सः सङ्घाते. ग.
7. सोमः पवताइ. यावाइ. वता-वर्वतावपि रवः वतावर्वग न.
8. गीतास्थाने ग.
9. निधने न

प्रभृतीनि । मर्तौऽ२ ( ३.२.३१ ) सखायः ( ४०० ) आत्वारथम् ( ३५४ ) यत्सोममि ( ३८४ ) [1]परिस्रव ( ५६७ ) द्वितः ? योनिमिन्द्रः ( स्तोभः ) सनादसि । [2]अन्त्ये । द्रविणस्युः ( ४ ) मन्द्रः ? वाहाऽ३१उवा२ ( ५.२.३३ ) [3]त्सिवादीनाम् । उच्चादित्यधिकारः । वसुद्रुवम् ( २३८ ) विवक्षसेऽ२३४५ ( ११.२.२३ ) नवकार इत्यधिकारः । द्वितोऽन्त्ये ॥ १ ॥

## २८५. तुडि ॥ २ ॥

[4]प्रस्तावे प्रत्यये परिस्वर्यते । इदन्तएकम् (६५) इन्द्रायसो (५६१) प्रभृतीनि । शुन्ध्युः ( ३९६ ) क्रेयदतैः ( ५६० ) दसीउभे ( ५४६ ) [5]विचक्षणः ( ५५४ ) तुडि ॥ २ ॥

## २८६. [6]ओवान्कया ॥ ३ ॥

ओवान्कयास्थिराया एव परिस्वर्यते । चन्द्राभिसोमयोः ( ४१७, ५१८ ) अन्यत् । त्रायइणाओऽ२३४वा ( १.२.४. ) द्वाइपाओऽ२३४वा ( ४.१.१४ ) शाइशाओऽ२३४वा ( १७.१.१५ ) [7]माइत्राओऽ२३४वा ( १६.१.२५ ) ओवान्कया ॥ ३ ॥

---

1. परिस्रुध क. ग.
2. अन्ते ख. ग.
3. क्लीबादीनाम् ख.
4. तुडि प्रस्तावे क. ख. ग. घ.
5. विवक्षणः क. ग.
6. ओवात्कया ग.
7. माइत्रायोवा ग. न.

## २८७. हस्ह्याः ॥ ४ ॥

न [1]माहस्ह्याः परिस्वर्यंते । देवैभाऽ२३इर्मा ( १.१.४. ) [2]त्रमो-असादीनि । [3]वृद्धं वा पदान्तो वा स्याचेत्[4] । मयोगि ( १३ ) अग्निर्नः ( २२ ) हस्ह्याः ॥ ४ ॥

## २८८. विश्वायाः [5]खिडि जि ॥ ५ ॥

[6]पाहिविश्वायाः खिडिप्रत्यये जिभूत्वा नु भवति । त्वते (४६९) गृणानः ( १ ) अध्वराणाम् ( २१ ) वशादीनि (४.१.१५) [7]पादान्तस्य ? सहस्रेणेव ( २३५ ) मानाः प्रभृतीनि । स्वायवः ( १३२ ) उदीरते ४७१) [8]चतुक्षिण इत्यधिकारः । धिया ऋकार्यत्वं न प्रतिषेध्यम् । विश्वायाः खिडि जि ॥ ५ ॥

## २८९. तद्वेदोंषा ॥ ६ ॥

तद्वे परं दोषायाः नु भवति । [9]पुरश्वनः ( १६६ ) प्रति (२०५ ?) सार्म्रोरका० ( ६.१.९ ) ( ? ) गाव्याऽ२० ( १३.२.९ ) द्रुतेवयम् (३७३) सुह–स्तिया ( १५.१.८ ) यदिन्द्रलिङ्गकुष्टे । तद्वेदोंषादीनि ? जनानाम् ( २. १.४. ) प्रथमे । भाष्यम् । [10]द्यौर्नः ( १६६ ) तद्वेदोंषा ॥ ६ ॥

1. महास्ह्याः परं ग.
2. हात्रामोज० ख. ग.
3. वृद्धा वा. ख.
4. स्याचे ख.
5. हिडि ख
6. याहिवि. ग.
7. पदान्तस्य. ग. घ.
8. चतुक्षण इ. ग.
9. पुरश्चन. ग.
10. द्योर्नो. घ.

## २९०. विष्णोरुद्युक्[1] ॥ ७ ॥

[2]विष्णुसंघातमुदात्तयुक्तं गीयते। अग्नेमृड ( २३ ) कस्यनूनम् ( ३४ ) अभिप्रवः ( २३५ ) अस्माकमद्य ( २४१ ) वृद्ध इत्यधिकारः। विष्णोः ? योनिमृतस्य ( ५११ ) अयं पूषा ( ५४६ ) ग्राम इत्यधिकारः। विष्णोरुद्युक् ॥ ७ ॥

## २९१. रोहादुद्भूते ॥ ८ ॥

[3]रोहात्परमभिगीयते उच्चीभूते प्रत्यये। तमृम्वसम् (२४३) [4]अनूऽ२३हो ( ११.१.१८ ) जाता ( ५६६ ? ) इन्द्रम्। अरतिम् ( १०९ ) हव्यवाहम् ( १२ ) प्रभृतीनि। रोहात् ? अमृतंजा ( ३५ ) [5]उद्भूते ? [6]प्रनआयूंषि ( १८४ ) भाष्यम्। समुद्रा ( १३७ ) रोहादुद्भूते ॥ ८ ॥

## २९२. द्वितीयो हि प्रथमेऽस्तवतः[7] ॥ ९ ॥

द्वितीयः कृष्यते प्रथमे प्रत्ययेऽवृद्धस्य पर्वणः। रोहादित्यधिकारः। [8]नराः—दीऽ३० ( २.२.८,९ ) अश्वंनत्वा ( १७,५३३. ) वितोषा (५२५) गाथोयन्वि ( ५२५ ) अस्यमे (५२६) रोहात् ? ममन्धसः (३१३) द्वितीयः ? तार्क्ष्यम् ( ३३२ ) आ. धावत ( ३.२.२० ) प्रथमेऽवृद्धस्य ? पेमाहोइ ( ७.२.१५. ) द्वितीयो हि प्रथमेऽस्तवतः ॥ ९ ॥

---

1. द्युन् स.
2. विष्णुसंघातः क. भाष्यं घ. न.
3. अभिगीत्य. ग.
4. अनौनूहो ग.
5. उद्धते. ग.
6. प्रण आयूंषि. ग.
7. अतथवतः मे. पु.
8. नुकारादि नव. क.

## २९३. ह्रस्वः पदान्तः ॥ १० ॥

ह्रस्वस्याक्षरस्य द्वैधं पदान्त एव कृप्यते[1] त्रिष्टुप्सु। इदन्तए ( ६५ ) प्रभृतिषु । नियतं च निष्टुचं च । ह्रस्वः पदान्तः ॥ १० ॥

इति नवमो दशकः ॥

---

## २९४. ओष्ठ्यचु गिभ्यां गाद्यात् ॥ १ ॥

ओष्ठ्यादेः पादस्य गिभ्यां परं वर्गाद्याच्च कृप्यते । नपर्वं ( ६८ ) सुरुचः ( ३२१ ) मर्हेव ( ८.२.३३ ) शुवर्द्ध ( १५.२.२६ ) ओष्ठ्यादेः ? अस्वंनत्वा ( ५२३ ) गिभ्याम् ? [2]पूपन् ( ७५ ) वर्गाद्यात् । विष्वक्त ( ३३९ ) पवस्वसो ( ५३२ ) ओष्ठ्यचु गिभ्यां गाद्यात् ॥ १ ॥

## २९५. द्रुस्य ॥ २ ॥

द्रुकसंघातस्य च कृप्यते । द्रुका० ( १२.१२७ ) अरिष्टे ( आ.१. १.९. ) द्रुस्य ॥ २ ॥

## २९६. पघ्र्वृद्धयोः ॥ ३ ॥

इकारात्परं घृद्धयोरक्षरयोः कृप्यते । [4]चिकिति: ( ४४७ ) [4]तमर्तियऽ३ः ( ८.१.५ ) अभिश्रियः ( ४८९ ) सुताइमे ( ५६६ ) पदान्तः ?

---

1. अत्रैव सूत्रसमाप्तिर्दृश्यते ।
 इतः उपरितनं भाष्यं घ. न
2. पूपन् ग.
3. चिकितः ग.
4. तमर्तियिः ग.
 तमयियः ग

अस्तिवृत्रहन् ( २०३ ) इकारात् ? व्रतस्थुपः ( २३३ ) वृद्धयोरिति ? [1]वर्हिपि ( १ ) इवप्रियम् ( ५ ) एर्वृद्धयोः ॥ ३ ॥

## २९७. [2]घाया विवुण् ॥ ४ ॥

जंघानायाः कृष्यते पञ्चसु मन्द्रेषु । अर्कस्य ( ४७२ ) योनिमृत ( ५११ ) [3]वाहुभ्याम् ( ३९८ ) पान्तम् ( ४९८ ) इदं व द्वितीये[4] ( ३.२.२२ ) जङ्घानायाः ? मिपीतये ( १६१ ) विवुण् जंघानायाः ? यस्यत्वम् ( १०८ ) आकलशम् ( ५७१ ) सहयोनौ । शुचिव[5] ( ५२४ ) त्वाऽसः । इपऽस्तो ( ४१९ ) मन्द्रयायाति ( ५१५ ) हिप्रत्यये नेत्यधिकारः । घाया विवुण् ॥ ४ ॥

## २९८. पाता ॥ ५ ॥

पातायां [6]च कृष्यते । [7]दूपेऽ३हाइ ( ९.२.१० ) आइन्द्रोऽ३हाइ ( ११.२.३६ ) अश्वपते ( ४०२ ) पाता ॥ ५ ॥

## २९९. [8]सार्वा ॥ ६ ॥

सार्वायां प्रत्यये कृष्यते । इत्थाऽ३४गुवाऽ३त् उ ( ८.१.२६ ) स्तोताऽ३उवाऽ३ ( ६.१.५ ) शुद्धैः (३५०) [9]वागाहाहिम् । चर्पण्यवृद्धिः ।

1. वर्हिपी ख.
2. गायाविवुण्. ग
3. पिनाहुभ्याम्. ख. ग.
4. द्वितीयः ग.
5. शुचिवा ख. शुचि ग.
6. च प्रत्यये ख.
7. दुपे भा. ख. ग.
8. सर्वा घ.
9. वागाहाऽौ य च, ग.

सार्वायाम् १ विद्धीत्वा ( १३२ ) [1]परिष्टो-मा ( ४.२.२८ ) [2]त्वायवः ( १३२ ) माप्यम्-नरमा० ( १०.२.८ ) द्वितीय इत्यधिकारः। [3]तिधेन ( ४७१ ) सार्वा ॥ ६ ॥

## ३००. [4]गोषायाः स्वरे ॥ ७ ॥

[4]गोपातायाः स्वरे प्रत्यये कुप्यते। द्वादशे परीतायाम् (१४.२.१२) रथीतमम् ( ३४३ ) सखायोदी ( ४४५ ) अपश्वानम् ( ५४५) उद्धातः। ऋतीपहम् ( ६.१.३३ ) द्युमन्तंत्वा० ( १३.२ ४ ) विश्वेदेशायाम्। धातो द्विपादीनि। स्वर इत्यत्रैव। गोपाया इति १ अभित्रिपृष्ठम् ( ५२८ ) यशसि गोपायाः स्वरे ॥ ७ ॥

## ३०१. अवि वि तुर्पु ॥ ८ ॥

ओकारे प्रत्यये कुप्यते विपु चतुर्पु। प्नियऽसुगेराऽ३ (४.१.२५) [5]न ऊर्मि ( ५७२ ) अस्तित्वादा ( ३४५ ) महीरपः[6] ( १४८ ) हरिमिः ( १५० )। त्वापूर्व्यं। [7]त्वऽहृत्यव् ( ३२६ ) ईरसाऽ२३इ-ओयेऽ३ ( ११.२.१६ ) वनाऽ३ ( १७.२.१० ) द्वादशे पुनानायाम् ( १४.१.३२ ) विश्वा-

1. परिष्टोम व. क.
2. त्वायशः क. ख.
3. यधेन. ख. घ.
4. गोपालायाः ख. सूत्रं घ. न.
5. न ऊर्मिम्. क.
6. रयः ग.
7. त्वंहृभ्य. ग.

वग्न् ( ५८१ ) रत्तिवाजा ( ८१ ) [1]उदिन्द्रा प्रभृतयः । [2]विरतिः । कदा । मद्रवत्सु । पाष्ठौहे । ऋत्वियः ( ४३८ ) घुमत्तमः ( ४७२ ) भाष्यम्-द्दाः ।
२१ २१ —
मरुद्भ्योवाऽ२ (१३.१.३०) [3]न द्वितीय इत्यधिकारः । अवि वि तुर्पु ॥८॥

## ३०२. रवत्सु ॥ ९ ॥

[4]रवत्स्वक्षरेषु कृष्यते । रर्णधाः ( ३२६ ) न ईरसे ( ४२८ ) रवत्सु ॥ ९ ॥

## ३०३. ष्ठादोहायाः ॥ १० ॥

कृष्टात्पराया ओहायाः कृष्यते । वृत्रस्यत्वा ( ३२४ ) आविशन् ( ४८१ ) पूर्वेण वा । ष्ठादोहायाः ॥ १० ॥

इति दशमो दशकः ॥

इति [5]सामतन्त्रभाष्ये तृतीयः प्रपाठकः ॥

---

अथ चतुर्थः प्रपाठकः ॥

## ३०४. हो उव्लि ॥ १ ॥

१ म २
होशब्द उव्लिङ्गायामृचि कृष्यते । [6]ऊर्दोऽ२होऽ२ ( ११.१.११ ) वयस्सु ( ३१९ ) नाके ( ३२० ) उव्लिङ्गायाम् ? जगृह्णा ( ३१७ ) परिस्वानोगि ( ४७५ ) परीतासु । हो उव्लि ॥ १ ॥

---

1. यदिन्द्राप्र. ख
   य इन्द्राप्र ग.
2. विरतिमः ग.
3. न द्वितीयं मत्य. ख.
4. रवत्स्वरेषु ग.
   रवत्स्वरे ग.
5. सामतन्त्रे क. ख. ग. घ.
6. उर्दोहो ख.

## २०५. स्वारे दीर्घम् ॥ २ ॥

२ १ १११
स्वारे[1] प्रत्यये दीर्घमक्षरं कृष्यते । [2]वयोऽ३भीऽ२३४५: ( ६.२.२८ )
२ १ १११ २ १ १११
मदाऽ३ईऽ२३४५ ( १६.१.२० ) द्विः । भगाऽ३याऽ२३४५ ( ६.२.३५;
२ १ १११ २ १ १११
११.२.२३ ) सुवीऽ३राऽ२३४५: ( १२.१.२३ ) अधाऽ३धाऽ२३४५:
२ १ १११ २ १
( ८.२.१८,२० ) दीर्घम् १ ससाऽ३मेऽ२३४५ ( १.१.३२ ) पिवाऽ३ईऽ-
१११ २ १ १११ २ १ १११
२३४५ ( ७.१.९ ) श्रवाऽ३ईऽ२३४५ ( १२.२.५ ) [3]द्रिवाऽ३ईऽ२३४५
१२ १ १११
(१०.१.६) भाष्यम् । प्रथमोचस्य । दक्षाऽ३ याऽ२३४५ ( ४.१.२४ ) द्विः ।
१२ १ १११ २ १ १११
दक्षिणेऽ३नाऽ२३४५ ( ५.१.१६ ) गृणीऽ३पेऽ२३४५ ( ८.२.२८ )

[4]गन्तु । स्वारे दीर्घम् ॥ २ ॥

## २०६. आदिर्घोपे ॥ ३ ॥

२ १ १११ २
आदिर्घोपे प्रत्यये कृष्यते । क्षाऽ३णाऽ२३४५: ( १६.२.३ ) ण्याऽ३
१ १११ २ १ १११
याऽ२३४५: ( १४.१.२२.३० ) [5]अधाऽ३द्राऽ२३४५: ( ८.२.१८,२० )
२ १ १११ २ १ १११
[6]धाइऽ३राऽ२३४५इ ( १६.२.३० ) वाऽ३हाऽ२३४५: ( २.२.२९ )
२ १ १११
घोपे १ अह्नाऽ२३४५: ( २.२.१,२. ) [7]द्विः । आदिर्घोपे ॥ ३ ॥

---

1. प्रत्यये फ. ख. ग. न.
2. वयोभिः फ. ख. ग.
3. द्रवाई फ. ख. ग. म.
4. अग्नन्तु. फ. ग. प.
5. अधाद्भीः ख.
6. द्वाइए फ.
　धाइराईया ख.
　द्वाइरा ग.
7. द्विः ख. न

## ३०७. मधोः खु ॥ ४ ॥

मधोर्नपायाः द्व्यक्षरायाः कृप्यते । [1]सङ्स्थाऽ३इ (११.१.५) [2]पवाऽ३ ( १३.२.४ ) शुधीऽ३ ( २.१.१७ ) चमाऽ३ ( १२.२.३१ ) सोमाऽ३म्[3] ( ११.१.२ ) मगौं-चाऽ३ ( २.१.३३ ) [4]श्पतीऽ३ः ( १.२.३३ ) प्रोया ( १६.२.१५ ? ) प्रथमे नेत्यधिकारः । मधोः खु ॥ ४ ॥

## ३०८. ह्वु हि ॥ ५ ॥

हकारादि हिप्रत्यये कृप्यते । [5]होऽ३हाऽ३-होऽ२३४तिं० (१.१.३३) महस्य ( ९७ ) इन्द्रंगीर्भिः[6] ( २३६ ) वहन्तुसो ( २४५ ) अच्छा-कोशम् ( ५१४ ) ब्रह्मजज्ञा ( ३२१ ) अस्यप्रेषा ( ५२६ ) ऋशवादीनाम् । द्वितीय इत्यधिकारः । भाष्यम् । सखायस्त्वाऔहोहोहाइ[7] ( २.१.३३ ? ) पर्वान्त इत्यधिकारः । ह्वु हि ॥ ५ ॥

## ३०९. मर्ता ॥ ६ ॥

मर्तायाश्च कृप्यते । मर्ताऽ३हो[8] ( २.२.२४ ) [9]उपाऽ३होइ ( ३.१.२८ ) वाइश्वेऽ३होइ ( ६.२.१७ ) अर्चाऽ३न्होइ ( ११.१.१८ ) जाताऽ

---

1. सस्याद ग.
2. पखा घ.
3. सोम ख.
4. अश्वपतिम् ख.
   रापतिः ग.
   श्पतिम् घ.
5. होहहो ख. घ.
6. गीर्तिः ग.
7. हौरहहोइ ख. घ.
   हैहहहोइ ग.
8. होइ क.
9. वाहोइ क.

३ऱ्होइ ( १६.१.३२ ) अनूऽरहोऽ१ ( ६.२.३१ १ ) भाष्यम्। उद्देशो वा। मतौ ॥ ६ ॥

## ३१०. सहो ॥ ७ ॥

सहोशायां प्रत्यये कृष्यते। अच्छानप्त्रे ( २१ ) प्रस्तोमा ( ४४ ) धामाहो ( ९३ ) [1]सखाय इ ( १६३ ) प्रभृतयः। [2]तेयाभिः। वाजीददा ( ५.२.२५ ) वेधाअसि ( ४७५ ) द्वितीय इत्यधिकारः। भाष्यम्–यओहोइ ( ४.१.२२ ) सहो ॥ ७ ॥

## ३११. हाजिच्च ॥ ८ ॥

हाशब्दे प्रत्यये कृष्यते द्वितीयादौ च। उपोषु ( ४७ ) [3]धन ( ५८० १ ) घृतंदुह ( १८७ ) अधप्रनूनम् ( ४६१ ) इन्द्रायेन्दो ( ४७२ ) चतुर्थे परीतायाम् ( १४.२.४ ) इहहाउवा। भाष्यम्। [4]ताइहसाऽ३ ( १६. २.२६ ) द्विपाहाइ। कृष्टत्वात्। हाजिच ॥ ८ ॥

## ३१२. [5]उदुह्येषु ॥ ९ ॥

उदुह्येष्वक्षरेषु कृष्यते। होऽ३होऽ३-होऽ२३४र्ति० ( १.१.३३ )

---

1. सखायप्र० क.
2. तोयाभिः क. ग. घ.
3. धनो क. ख. ग. योनो घ.
4. ताइहासा ग.
5. इदुह्येषु घ

२ १ २ २ १
[1]अपात्वचम्–औहोऽ२हाऽ२३४० (१३.२.२७) चित्रम इह (२४५) बृहन्नधि (५५४) [2]वास्तोष्पते प्रभृतीनि। जातःपृच्छाऽ३त् (६.१.८) शतक्रतो (४०५) मित्रोनय (४२६) अमृतं दधादीनि। [3]जनिता। इन्द्रंवृधा[4] (४.२.१२ ?) अरतिम् (४५) हव्यवाहम् (१२) प्रभृतीनि। नमेगाइरा (६.२.८) न द्वितीय इत्यधिकारः। उदुह्येषु ॥ ९ ॥

## ३१३. भ इन्वतः ॥ १० ॥

स्तोमे प्रत्यये इन्वतः पर्वणः कृष्यते। आत्वासह (२४५) शग्ध्यूपु अन्त्ये (७.१.१२) नियतं च निवृत्तं च। भ इन्वतः ॥ १० ॥

॥ इति प्रथमो दशकः ॥

---

## ३१४. छपूर्वाद्द्वितायाः ॥ १ ॥

कृष्टपूर्वादक्षराद्द्वितायाः कृष्यते। इन्द्रश्स्तोता (१४४) पुरुहूतम्। [5]द्रिभिस्सुतम् (४९९) कृष्टपूर्वाद्द्वितायाः ? [6]पुरश्चनः (१६६) प्रभृतीनि। छपूर्वाद्द्वितायाः ॥ १ ॥

---

1. अपाघ्र क. अपाघ्रचं आधि. ख. मवान्व औहोसा. ग.
2. वास्तोष्पति. ख.
3. जातेन्द्रम्. घ.
4. वृधा. क. ग. न.
5. द्रितिस्सुतम्. ग.
6. पुराप्रभृतीनि घ. पुरश्चप्रभृ. ग

## ३१५. हायन्[1] ॥ २ ॥

हायन्ते पर्वणि कृष्यते। विहिते विधिप्रतिषेधाय। हिम्मा२-चा२ तौ३४५हाइ (५.१.२५) [2]पा३ताइ-सो२३४मऽहाइ (११.१.३) [3]वचस्तुपे (८७) दीर्घमित्यधिकारः। हायन् ॥ २ ॥

## ३१६. द्व्यक्षरे ॥ ३ ॥

द्व्यक्षरे[4] च गीते कृष्यते। इन्द्रमच्छ (५६६) पवस्वम (५७८) यवजिवः (२९१) पराशुल्का (२९१) अस्मेदेहि (९९) अयऽससो (३९२) वानिषु[5]। गायत। यदिन्द्रोया (४.२.६) द्व्यक्षर इति ? इन्द्रोमदाय (४११) इन्द्रोविश्वस्य (३५९) अभ्यर्प (५७६) हीप्यां वाशब्द इति ? वाशंयत् (?) तरस्विनम् (३७०) नवान्त इत्यधिकारः। द्व्यक्षरे ॥३॥

## ३१७. चतुर्थे ॥ ४ ॥

चतुर्थे प्रत्यये कृष्यते। नेमिन्तष्टा (२३८) [6]पुरोहितः (४८) [7]सती न हि प्रभृतीनि। चतुर्थे ॥ ४ ॥

॥ इति [8]द्वितीयो दशकः ॥

---

1. हायत् ग.
2. याऽ३ ताइ ग.
3. घवस्तुपे. क. ग. घ.
4. सर्गाते क.
5. गायतादिन्द्रोया क.
6. पुरोजिताः ग.
7. सति नहिप्र० क. ख. घ.
8. तृतीयः ख.

## ३१८. आचतुर्थादावि ॥ १ ॥

आचतुर्थात्कृष्यते औकारे प्रत्यये। [1]विश्ववार। ( ६१ ) तृतीये। [2]क्षसाधनः ( ४७४ ) मृणाऽ३४० ( ४.१.२३ ) [3]कराऽ२४० (८.२.२९) आचतुर्थादावि ॥ १ ॥

## ३१९. [4]वीतस्य ॥ २ ॥

[5]वीतसह्यातस्य च कृष्यते। प्रमित्राय ( २५५ ) अयावीत्योः। ( ४९५ ) [6]वीतस्य ॥ २ ॥

## ३२०. [7]उदुह्यरेऽह्यान्ते ॥ ३ ॥

उदुह्यपर औकारे प्रत्यये कृष्यतेऽह्यान्ते पर्वणि। तमध्वरा ( १७ ) ढिष्ण्याप्रभृतीनि। औकारे ? [8]शताम्-[9]आत्वामहा ( ६.२.२६. ) उदुह्यपरे ? स्थिराः ( ६. १.२५ ? ) अह्यान्ते ? वयामौ (४.१.९) उदुह्यरेऽह्यान्ते ॥ ३ ॥

## ३२१. [10]द्वितीये ॥ ४ ॥

द्वितीये च यत्प्रकृतं उदुह्यपरे कृष्यते। सुमतिः ( ७६ ) [11]ग्ताऽ३ः

1. विश्वायारा. क. ख. ग. घ.
2. क्षरेसाधनम्. क
   क्षसाधनम्. ख.
   क्षरसाध. घ.
3. करा औ ख.
4. वितस्य. ग.
5. वित. ग.
6. वीभ्योः ग.
7. उदुह्यरे ह्यान्ते ग. घ.
8. शता. ख. ग. घ.
9. त्वत्समा अ. पा. घ.
10. द्वितीये सूत्रं घ. न.
11. वाताः. ख. ङ.

( ११.१.१६ ) ब्रह्माऽ२-यकल्वियोवा-ओवा ( ११.२.३५ ) [1]अस्मे रायादीनि । [2]सुगोऽ३-होऽ३१२३४ ( ७.१.१८ ) [3]महस्ययोः ( ९७ ) [4]उदुह्यपरे ? विरप्शि ( ८.२.१७ ) द्वितीये ? वृणाक् ( ७.१.२७ ) मान इन्द्र ( १२८ ) द्वितीये ॥ ४ ॥

## ३२२. [5]ओइत्रि ॥ ५ ॥

ओइत्रिकायां प्रत्यये कृष्यते । शाऽ३२३न्तमानि ( ८.२.१७. ) कईव्यक्ताः ( ४३३ ) ओइत्रि ॥ ५ ॥

## ३२३. स ऽस्था ॥ ६ ॥

सऽस्थायाश्चकृष्यते । [6]वृताऽ३४३ (५.२.२२) पूर्णोऽ३४३, (११.२ १३ ) वृषेभर ( ३२८ ) रयिवाजी ( १९९ ) होऽ३४३रय० ( १७.१.४ ) उद्देशो वा । सऽस्था ॥ ६ ॥

## ३२४. [7]विदस्य पि ॥ ७ ॥

[8]विदस्य पकारे कृष्यते । इन्द्रस्येव प्रतव[9] ( ७८ ) वैराजे ( आ. २.१.३१ ) विदस्य पि ॥ ७ ॥

---

1. अस्मेस्यादीनि. ग.
2. सुगोहाभा. ग.
3. माहास्ययोः क. ग.
4. उदुह्यद्वितीये ख.
5. ओइत्रि सूत्र घ. नः
6. प्रताः ख. वृताः ग.
7. विदस्यपि सूत्रं घ. न.
8. विदस्य घ. न.
9. प्रव. ख. स्येवप्रतव ग.

## ३२५. पासे नावा ॥ ८ ॥

पासे स्वरे नावायाः कृप्यते। सयाऽ२३हाऽ३४३इ ( १.१.१४ ) अग्नेरथादीनि[1]। [2]पासे ? देवव्रादीनि। नावायाः ? तिस्र ( १ ) इहरायः। पासे नावा ॥ ८ ॥

## ३२६. डारे ॥ ९ ॥

डारे चाक्षरे प्रत्यये कृप्यते। [3]धिनाशनः ( १६६ ) प्रश्नजज्ञा ( ३२१ ) [4]वृपापव्रापष्ठे ( १२२.२८ ) हाहा। वायोरनी ( १३ ) इडाऽ२३भाऽ३४३ ( १.१.५ etc ) पासे स्वर इत्यधिकारः। डारे ॥ ९ ॥

## ३२७. मधो क्षरेऽनावि ॥ १० ॥

मधोर्नपाया अक्षरे प्रत्यये कृप्यतेऽनौकारे। मधोऽ३४र्नपा ( २१.६ ) [5]इंडस्पदे ( ६३ ) ग्नताऽ३४त्रामाऽ१ ( ८१.२६ ) भगाय ( ४२७ ? ) [6]तुर्हि। गिरागिरा ( ३५ ) आग्नेत्रा[7] ( २११ ? ) शम्भु ( १८४ ) कनस्युवृष ( १४२ ) यथागौरः ( २५२ ) अभित्य मेपम् (३७६) परिस्तान. ( ४७५ ) अपामित्र ( ५४४ ) इति च। सोमसोमपते ( ४०२ ) त्वेपा अया ( ४९१ ) पवमान ( ५२२? ) सोमो यस्तु ( ५८२ )

---

1 इत प्रभृति उपरितनसूत्रीय स्वर इत्यन्त घ॰नः
2 पासे,देवव्रादीनि ख न.
3 धिनाशना ख
4 वृपासु हो, क
5 पवस्वदे क रव. ग घ
6 पिन्हिस्यि क
7 ग्नेस्तेत्र क
ग्ने त्वा शम्भु ख
गोत्रा ग घ,

त्वंविप्र[1] ( ५१९ ) सार्गा । मधोक्षरे ? इन्द्रंगीर्भिः ( २३६,३८२ )-अनौकारपरे ? विश्ववार ( ६१ ) स इन्द्रः ( ३३७ ) भाष्यम्–अयवाम् ( ३०६ ) मधोक्षरेऽनावि ॥ १० ॥

॥ इति तृतीयो दशकः ॥

---

## ३२८. तौ ॥ १ ॥

यथर्चे प्रत्यये कृष्यते । अरमश्वा ( ११८ ) त्वष्टा ( २९९ ) [2]विश्वानर ( ३६४ ) इन्द्रोविश्व[3] ( ४५६ ) जाताउग्राऽ२३४–मइन्दवः ( १७.१.४ ) यथर्चे ? [4]शताम्–आत्वासह ( ६ २ २६ ) अर्चादि ( ८८ ) उदुह्ये न इत्यधिकारः । भाष्यम्–तरऽ२३४स्विनम् ( ९.२.३५ ) तौ ॥ १ ॥

## ३२९. प्रथमश्च ॥ २ ॥

प्रथमश्च यत्प्रकृतः द्वितीयश्च तौ प्रत्यये कृष्यते । हुणीथा ( ११० ) तस्सुतसो ( २३७ ) राधस्तन्नः ( ३४५ ) तक्षयदी ( ५३७ ) ताऽ२३४इ. नियज्ञते ( १६.२.२३ ) पाहिप्रभृतीनि । प्रथमश्च ॥ २ ॥

## ३३०. उदुह्ये ॥ ३ ॥

उदुह्ये प्रत्यये कृष्यते । मानी । हीऽ२३४पी ( १.१.१ ) औहोरा-रान्वये । मन्द्रायाऽ२३४या ( १४.२.२६ ) माऽ२३४हाइ ( २.१.३३ )

---

1. त्वविप्रा अभवन् स
2. विश्वावारा क विश्वावार. ग.
3. विश्वा. ग.
4. दशता क.

कवाक्तिभिः ( १ ) दाऽ२३४ शोंहाइ ( १.२.१६ ) उदुह्ले ॥ ३ ॥

## ३३१. यचु हि ॥ ४ ॥

यकारादि हि प्रत्यये कृप्यते । अङ्क्ते ( ५६४ ) अन्वये । अन्यत् । मासीऽ३या (५.१.३३) यंवृत्रेषु ( ३३७ ) कार्यम् । शन्नः ( ३३ ) यचु हि ॥ ४ ॥

## ३३२. नावातृतीयात् ॥ ५ ॥

नौ प्रत्यये आतृतीयात्कृप्यते । काऽ२३र्षाऽ३ (३.१.२४) प्रभृतीनि चरामसि ( ३७३ ) नावातृतीयात् ॥ ५ ॥

## ३३३. दिनुनि न [1]भयुक् ॥ ६ ॥

दिनुनिगीते पर्वणि न भयुक्तं कृप्यते । जरमाणाऽ२३म् ( १०.१.१५ ) [2]भयमानाऽ२३ः (९.१.४) देवो देवस्य । ऋमुक्षणम् ( १९९ ) अग्नेर ( ५ ) श्येनः ( ४७३ ) चोहरि ( ३८२ ) भूयाऽ२३० (१७.१.१३) न [3]भयुक्तम् ? [4]ओइमाऽ२३हीऽ३ ( १६.१.३६ ) [5]नक्येवम् ( २०३ ) मन्द्रे ? साऽ२३४ हा ( १३.१.१.१ ) तविस्मादीनाम् । अत्रिवत इत्यधिकारः । दिनुनि न भयुक् ॥ ६ ॥

1. ह्युक् क.
2. भयमानाम्. क. ख. ग.
3. नहियु. ख. नगयु. ग.
4. महि क.
5. नुव्वेवम्. ग.

## ३३४. ईशे ॥ ७ ॥

ईशे [1]स्तोमे कृप्यते। भरद्वाजे ( ३७ ) [2]महेवृत्राय.( ११९ ) आपोनद्व ( २६१ ) गावोमिमन्ति ( ४७१ ) तपानोदे (३९) ईशे ॥ ७ ॥

## ३३५. मयो ॥ ८ ॥

मयोवायां प्रत्यये कृप्यते । यजतंप ( ६३ ) [3]यस्यत्वद्स ( १०८ ) शाहव्यम् ( १०९ ) मेमेहवा । तुवोवा ( ५.२.२६ ) ये तेऽग्ने प्रभृतीनि । मयो ॥ ८ ॥

## ३३६. सूप्वा ॥ ९ ॥

सूप्वायां प्रत्यये कृप्यते । त्वादाशि ( ९७ ) [4]द्विपाचतुः (२६७) सूप्वा ॥ ९ ॥

## ३३७. देया हि ॥ १० ॥

[5]देदिशताया हि प्रत्यये कृप्यते। तदिन्द्रते ( १२६ ) होये । हयायेऽ२ इन्द्रंविश्वाः ( ९.१.२३ ) देया हि ॥ १० ॥

॥ इति चतुर्थो दशकः ॥

---

1. स्तोत्रे ग.
2. महे व्रताया क. ख
   मदे वृत्राया ग.
3. यस्यश्चसे घ.
4. द्विपच्चतुः ग.
5. देदिशताया ख.
6. अतिछ. ख.

## २३८. अनञ्जह्वायाः ॥ १ ॥

[6]अनच्छब्दात्परं जह्वानायाः [1]स्तोभे कृप्यते। अप्तुरम् ( ४८७ ) भिस्सुतम् ( ४९९ ) तरोभिः ( २३७ ) इत ऊति ( २८३ ) प्रश्नोर्चा। पुनान एकादशे ( १४.१.३१ ) परीतोपि द्वितीये ( १४.२.२२ ) अनच्छब्दात्परं जह्वानायाः स्तोभ इत्यधिकारः। अनजह्वायाः ॥ १ ॥

## २३९. [2]उद्वतम् ॥ २ ॥

उद्वतं यस्मिन्प्रकृतं ( ? ) हि प्रत्यये कृप्यते। नेमिन्तष्टा ( २३८ ) त्वामिद्धि ( २३४ ) [3]द्वरिपार्दौ प्रभृतीनि ( ? ) उद्वतम् ? हाहोहोवा। अहान् ( ४११ ) हि प्रत्यये ? [4]अमिन्द्रा० ( ९.१.५ ) उद्वतम् ॥ २ ॥

## २४०. दधा ॥ ३ ॥

दधायाश्च कृप्यते। ओंऽ३होऽ३१इ-यन्मातु० ( २.१.२१ ) द्विपाऽ२ःहाऽ२इ ( ५.२.२० ) महाऽ२-हाऽ२इ ( १२.२.९ ) दधा ॥ ३ ॥

## २४१. द्रसे शतिनि ॥ ४ ॥

द्रसे[5] स्तोभे शतिनि साम्नि कृप्यते। चन्द्रप्राणयोः ( ४१७,५७० ) शतिनि ? द्रमोमो ( ४.२.३० ) द्रमोमाः ( ६.१.४ ) [6]इन्द्राय। अभिप्रि

1. स्तोत्रे ग.
2. सूत्रं घ. न.
3. पार्दौ प्रभृ० क, प्रभृपार्दौ ग. द्रभृपार्दौ घ.
4. मभिन्द्रा. क. ग.
5. प्रत्ययं घ.
6. इन्द्रिया. ख.

( ५५४ ) द्रसे शतिनि ॥ ४ ॥

## ३४२. नो तद्वयाः ॥ ५ ॥

अनुकारस्तद्वयाः कृप्यते । अत्र ( १४७ ) उभयोः । गोमान् ( २७७ ) स्थानासः ( ४८५ ) सजात्येन ( ४०४ ) [1]सुताय ( ५४५ ) गोभादीनि । तद्वयाः ? [2]कशादीनि । [3]अनुकारः ? [4]प्रहेता ( ३८३ ) नो तद्वयाः ॥ ५ ॥

## ३४३. मतौ ॥ ६ ॥

[5]मतौ सङ्घातस्य च कृप्यते । मतौऽ२-हुवाइ-औऽ३होऽ२३४५नाऽ५६५ ( ३.२.३१ ) गीत्यधिकारः । मतौ ॥ ६ ॥

## ३४४. द्यान्ते ॥ ७ ॥

द्यान्ते पर्वणि कृप्यते । [6]गोमस्तु ( ३५१ ) यद्राम ( ३८४ ) इन्दो ( ५४९ ) [7]मयास्मोमे । भाष्यम् गोमिष्टे ( ५७५ ) द्यान्ते ॥ ७ ॥

## ३४५. नन्दः ॥ ८ ॥

नन्दस्वरश्च कृप्यते । द्यान्त इत्यधिकारः । गोमिष्टे ( ५७५ ) नन्दः ॥ ८ ॥

---

1. सुजाताय घ.
2. फाशादीनि घ
3. अनुस्वारः क. ख. ग.
4 प्रहोता क. ग घ.
5 भाष्यं क. ख. ग न.
6 गोमान्तु ग.
7 मयास्मोमो ग. मयस्मास्मो घ.

## ३४६. तृतीयपरे ॥ ९ ॥

तृतीयपरे चाक्षरे प्रत्यये क्रुष्यते। गोपा ( ३४ ) [1]पिवि। वर्द्धन्तु ( २५० ) हुवाइ-हुवाये ( ३.२.१८ ? ) ताऽ२३इ-दिविया ( ११.१.३२. ? ) [2]विशस्त ( ८५ ) देवासो देव प्रभृतीनि। नन्दः ? हिन्वन्नृतस्य ( ५७० ) तृतीयपरे ? अरिष्टनेमिम् ( ३३२ ) सोमोऽस्मभ्यम्। इदमिदकम् (४.१.३०) [3]अनुभाव इत्यधिकारः। तृतीयपरे ॥ ९ ॥

## ३४७. [4]इद्वृद्धं चायाम् ॥ १० ॥

[5]इस्थं वृद्धं चायां क्रुष्यते। तिधीतिमिः ( स्तोमः cf. ७.१.२१ ) परिधीरति ( ५१६ ) अर्कग्रीवायाम् ( आ. १.२.१२ ) सर्पसामाययोः ( आ.२.१.१,२. ) प्रसोमदे ( आ. २.२.१५,१६ ) कायमानायाम् ( आ. २.२.१३ ? ) इस्थम् ? [6]जह्नान। जगृह्णान्ते ( ८.२.११ ) वृद्धम्। हिऽ३ पाऽ३या ( ८.२.१६ ) महित्री स्ये ( आ.३.२.१ ) चायाम् ? तेजा (४६७) तृतीयपर इत्यधिकारः। इद्वृद्धं चायाम् ॥ १० ॥

॥ इति पञ्चमो दशकः ॥

---

1. पिवि ग. न.
2. विशस्ता. क. ख. ग. घ.
3. अनुगाय क. ख.
4. उद्वृद्धं घ.
5. उस्थं वृ० घ.
6. जघान घ.

## ५०८. [1]चं प्सुण्यादेः ॥ २ ॥

चंलिङ्गे साम्नि प्सुण्यादेः [2]पर्वणः आदेः पराणि वर्धन्ते । चन्द्रमा आये ( ११.१.३१ ) चं प्सुण्यादेः ॥ २ ॥

## ५०९ मे ॥ ३ ॥

　　　　　　१　　२
मेशब्दो वर्धते । वित्तम्माआउवा ( ११.१.३१ ) मे ॥ ३ ॥

## ५१०. वृषा ॥ ४ ॥

वृषासङ्घातस्य [3]च पर्वणः आदेः पराणि वर्धन्ते । [4]ग्निश्चिकितिः ( ४४७ ) [5]वृषापव ( ४६९ ) वृषा ॥ ४ ॥

## ५११. आ हि ॥ ५ ॥

[6]आकारः ( ? ) सकृत्कृष्टान्तस्य च पर्वणः आदेः पराणि वर्धन्ते । क्रतुवित् ( ५७८ ) तविषम् ( ३८२ ) आ हि ॥ ५ ॥

## ५१२. स्वन्धः ॥ ६ ॥

चतुरक्षरस्य पर्वणः अन्धस्वरो वर्धते । [7]आदेः पर इत्यधिकारः ।
२ १ २　　　　　　　२ १ २　　　　　　२२१ २
वसोराधा ( १.२.३६ ) [8]ग्निमाइन्धाता (४.१.१३) माताचामौ[9] (८.१.१३)
२ १ २　　　　२ १ २　　　　　　　　२ १ २
हुवाइहोवा । ध्रुवा-स्थूणा०[10] ( ७.२.२० ) ऊर्जाम्पाता ( १.२.२७ )

---

1. चप्सुण्यदि. ग चंसन्नादेः घ.
2. पर्वणः ख. न.
3. च ग. न.
4. धनिश्चि. ख.
5. वृ पापया. क. ग.
6. आकारम्. ख.
7. आदेः पर इत्यधिकारः ग. न..
8. निमाइन्धाता. क. घ.
9. मौ क. न.
10. स्थूणा. ग.

[1]प्रमित्रायाम् ( २५५ ) मेडिम् ( ३२७ ) [2]वृषापावा ( १२.२.२९ ) यक्षाइयासा ( २.१.३२ ) रुपाइर्दूर्वां ( ८.२.२९ ) स्वादाइष्ठाया ( १२.२. १४,२१ ) धनूष्टान्वा ( १६.१.३५ ) स्ये-चर्पणीधृतम् ( ३७४ आ.२.१.१ ) कयानायाम् ( आ.६.१.४ ) चतुरक्षरस्येति ? नेमिः प्रभृतीनि । अन्धस्वरस्येति ? नजागृविः ( ५१४ ) घन्धः ॥ ६ ॥

## ५१३. ग्यचु ष्टिनस्तत्रे ॥ ७ ॥

प्रथमादेः कृष्टिनः पर्वणः तत्रसंघाते वर्धते । तत्रपूया ( १४८ ) अभिप्रशर्थ ( २७९ ) देवानीः ( ४७० ) निवृत्तानि । उपोपुजातमप्रभृतीनि । ग्यचु ष्टिनस्तत्रे ॥ ७ ॥

## ५१४. सचन् ॥ ८ ॥

सकारान्तस्य च पर्वणः [3]कृष्टिनः आदेः पराणि वर्धन्ते । इनीमसी ( १७६ ) मदेपुस ( ४७५ ) सुपावसो ( ५१२ ) पवित्रेसो ( ४७५ ) द्विः । सकारान्तस्य ? अभिवत्सम् ( २३६ ) माध्यम्-अपोवसा ( ५११ ) सचन् ॥ ८ ॥

## ५१५. अचु नवृद्धयोर्नावि ॥ ९ ॥

आदिर्वर्धतेऽवृद्धयोः प्रत्यययोरनौकारपरे[4] पर्वणि । गार्हपताऽ३इ

1. प्रमित्रा प्रमित्रायाम्. ग.
2. वृषापत्र् ग.
3. कृष्टिनः ग. न. आदेः कृष्टिनः रा.
4. अनौपरे रा. ग.

( १.२.३२ ) जातःपृच्छाऽ३त् ( ६.१.८ ) [1]ऊपोपुजाऽ३ ( २.१.१३ ) आरमिन्द्राऽ३ ( ३.२.९ ) राम्वृपभाऽ३म् ( १७.२.१६ ) [2]अचिक्रदायाम् ( ४९७ ) नदीदिवः ( ४२ ) त्वङ्सन्वृपन्[3] ( १२० ) आदिद्वन्द्वे ( २८८ ) [4]सहस्रधा ( ४८१ ) अमिवत्सम् ( २३६ ) [5]गृहादीनि । भाष्यम्-ण्वन्द्व ( ५४० ) [6]अच्वृद्धयोरिति ? दधन्वाँयः ( ५१२ ) सुपावसोम ( ५१२ ) पवमान ( ५४० ) इन्द्रंवाणीऽ३ः ( ५.२.२४ ) तत्रादीनि । अनौकापरे ? आदिद्वन्दा ( ८.१.६ ) धर्तारंव्या ( ८.१.६ ) अवाहन्ना ( १३.२.३३ ) अनु नवृद्धयोर्नावि ॥ ९ ॥

## ५१६. [7]आनौष्ठ्ये ॥ १० ॥

[8]आकारो वर्धतेऽनौष्ठ्याद्ये [9]पर्वणि । आजातासौ ( २.१.१९ ) [10]आविवासाऽ३४ ( २.१.१ ) [11]आकारः ? वृपाधर्माऽ३ ( १४.१.१३ ) चत्वारि ( ५६० ) दधन्वादीनि । अनौष्ठ्याद्ये ? स्वादिष्ठया ( ४६८ ) [12]अचिक्रदायाम् ( ४९७ ) अनौकारपरे ? यदाद्वितीये ( ८.१.६ )

---

1. उपूपुजा ख.
2. आचिक्रदायाम् ख. ग.
3. चराज. ग. अधिकः पाठः
4. साहस्रधा ख.
5. प्रहादीनि ख.
6. इतः प्रभृत्यासूत्रसमाप्ते भीर्ष्य घ. न
7. अनौप्ठ्ये ग.
8. आकारे. क. अकारे ग.
9. अनौष्ठदेः ग.
10. आवितासा. क
11. अकारः घ.
12. आचिन्दायाम्. ख.

आनौप्ये ॥ १० ॥

॥ इति प्रथमो दशकः ॥

---

## ५१७. दित् ॥ १ ॥

दिच्छन्दो पर्धते । आदाइद्वन्दाऽ२३ (८.१.७) कृष्टिन इत्यधिकारः।

दित् ॥ १ ॥

## ५१८. [1]नि खट् ॥ २ ॥

[1]नि प्रत्यये खड्वर्धते । [2]असोमम् । इन्द्रसोमम् ( १९१ ) ज्यादेः ? सुतासोयेऽ२ ( ६.१.४ ) नि खट् ॥ २ ॥

## ५१९. [3]ओ स चु सर्वम् ॥ ३ ॥

## ५२०. इदुर्वादेर्नइषु ॥ ४ ॥

इस्थगुवदिः [4]पर्वणः सर्वाणि वर्धन्ते । नइपुवति पर्वणि । [5]देवावीर .( ४७० ) विश्वे यस्मिन् ( ८५ ) [6]मित्रोनय ( ४२६ ) तेनापय ( ४७० ) इस्थगुवदिः ? विपामग्रे ( ५५१ ) नइपुवति ? इन्द्रो विश्वस्य ( ३५९ ) इन्द्रंवाणीः ( १९८ ) देवेपुधी[7] ( ३५५ ) इदुगुवदिर्न-

---

1. भाष्यं न.
2. भाष्यं क. ग. घ. न. सूत्रभाष्ये ख. न.
3. क. ख. कोशयोरुपलभ्यमानोऽयं भागः मन्ये तृतीयसूत्रस्य भवेदिति। तृतीयसूत्रस्य भाष्यं नोपलभ्यते।
4. पर्वणि. घ.
5. देवचीर. ग.
6. मित्रोनाया क. ख. मित्रानया. ग.
7. धी ख. न.

इपु ॥ ४ ॥

### ५२१. आयः ॥ ५ ॥

आयादेश्च पर्वणस्सर्वाणि वर्धन्ते । रायास्पूर्धाऽइ ( ९.२.२ ) वायूमारोऽ३१२३ ( १३.२.१३ ) [1]आयादेरिति ? जातःपृच्छाऽ३त् ( ६.१.८ ) आयः ॥ ५ ॥

### ५२२. [2]नान् ॥ ६ ॥

न अन्शब्दो वर्धते । त्वङ्सन्वपन् ( १२० ) आदिद्वन्द्वे ( २८८ ) अथाहन् ( ४९५ ) ण्यन्वजन ( ५४० ) ग्यादेः ? [3]वसुत्वानौ ( ८.१.१३ ) नान्-॥ ६ ॥

### ५२३. अडिनोऽविपुह्यत ॥ ७ ॥

पदमद्वितीयस्यान्धस्वरस्य द्वैधं [4]अविप्वेवाक्षरेपु वर्धते [5]हकारिण्यामृचि [6]अतशब्दिनि गीते । एपाग्राक्षाऽ३४२ ( ११.२.३७ ) धर्तादाइयाऽ३ ( १६.२.१९ ) [7]अभीनोवाऽ३१२३४ ( १६.१.२८ ) स्ये-[8]वसाव्याआऽ३४ ( आ ३.१.५ ) निवृत्तानि । अमृतंजाप्रभृतिपु । अग्नेप्रमृपे ( ५३ ) [9]मघङ्रयाऽ३१२३४इ ( १२.१.४ ) प्रधन्वावाऽ३ ( ११.२.१७ ) हकारिण्याम् ? तच्चक्षुपि । अतशब्दिनि ? अपान्नपाऽ३

---

1. आयादेरिति ख. न.
2. नात्. ग.
3. वसुत्वाना. ख. ग.
4. विप्वेर क. ख. घ.
5. हकरिण्यतशब्द. क.
6. अन्तश० ख.
7. अर्तीनो. ग.
8. वासव्ये क. ख.
9. मर्घरयिपिड. ग.

( २.१.३३ ) [1]रयिमर्प ( ५४९ ) पदमद्वितीयस्येति । श्रताःपार्थूऽ३ः ( १०.२.२५ ), तिधाद्तार्इभीऽ३ः ( ७.१.२१ ) क्रुष्टिन इति । वसोराधादीनि । ह्यादेस्तु विशेषः । अडिनोऽग्निपुद्यत ॥ ७ ॥

५२४. व्यम् ॥ ८ ॥

तालव्यं वर्धते । मश्हिष्म् ( १५५ ) ऊतीमदा ( १६९ ) [2]आदीमायन् । ( ५३७ ) द्वितीयमित्यधिकारः । व्यम् ॥ ८ ॥

५२५. [3]यक्षि डेव ॥ ९ ॥

[4]यक्षिशब्दवत्यामृचि पादोपान्त्यमेव वर्धते । रम्रचेताः ( ६१ ) स्ये-अर्यपूपायाम् । सिद्धग्रहणादन्येषां निवृत्तिः । यक्षि डेव ॥ ९ ॥

५२६. [5]ज्यो नन्दे ॥ १० ॥

ज्योतिपायां नन्दे वर्धते । दतुत्वा ( ३९८ ) यज्ञायाम् । निवृत्तानि । ज्योतिपादीनि । सखायस्तो ( ३८७ ) अविदत् । स्वरीयस्तु । ज्यो नन्दे ॥ १० ॥

॥ इति द्वितीयो दशकः ॥

---

1. रयिमर्पा. ग.
2. आदीमायन घ. न.
3. यक्षिडेव क. यक्षिरिडे स्यच. घ.
4. यन्डन्द. क. यक्षा शब्द० ग यक्षश० ग.
5. सूत्रं घ. न.

## ५२७. रा ॥ १ ॥

रालिङ्गायामृचि वर्धते । गिरामहा ( २६५ ) [1]गोपते ( ४०२ ) सुभग ( १११ ) पुनानोअ ( ४६३ ) अमृतम् ( ३५ ) इन्द्रंद्य ( ४९४ ) प्रतिषेध्यम् । रा ॥ १ ॥

## ५२८. ज्यन्ते ॥ २ ॥

[2]जकारिण्यामृचि अन्ते न वर्धते[3] । तमध्वरा ( १७ ) [4]शुक्रस्यत्वा ( ३४४ ) ज्यन्ते ॥ २ ॥

## ५२९. रिणि नेः ॥ ३ ॥

२ १ १र

*रिणि गीते गतेः परोऽन्त्यो न वर्धते । [5]गिराइर्नयौ* (१०.२.२६) हन्तिरक्षः ( ५४० ) वरिवस्क ( ५४० ) नमेगिरा ( २३८ ) [6]अभिश्रियः ( ४८९ ) पादमध्यस्येत्यधिकारः । रिणि नेः ॥ ३ ॥

## ५३०. यिणः ॥ ४ ॥

२ १ २

यकारिणः पर्वण [7]इणः परोऽन्त्यो[8] न वर्धते । प्रदाइवियै ( २.१.२५ ) मदाय ( ४७३ ) मधारया ( ४६८ ) यपातवे ( ४६८ )

२१ १ २

वसुविदम् ( २५३ ) गदैव्यम् ( ५८३ ) पृगायता ( ७.१.१७ ) गोद्य

1. सोपते क.
2. जकारिसामृचि क.
3. वर्धन्ते ख
4. शुक्रास्य ग.
5. इतः प्रभृत्याग्रिमसूत्र भाष्यगतवर्धतपर्यन्तं फ. न.
6. अभिश्रिया ग.
7. इणः ग. न
8. अन्त्यो ग. न.

( ३९३ ) स्वाराया ( १२.२.२९ ) पादमध्यस्येत्यधिकारः । यिणः ॥ ४ ॥

## ५३१. इण्याम् ॥ ५ ॥

[1]इकारिण्यामृच्यन्त्यो [2]न वर्धते । धिधावति ( १७.१.३० ) भिरूतिभिः ( ७.१.१२ ) [3]विसेनाभिः ( ३३४ ) तिधीतिभिः ( स्तोमः ) कृष्टिनो विशेषः । यक्षि ( ६१ ) इन्द्रमभि ( १५५ ) पदादेरित्यधिकारः । इण्याम् ॥ ५ ॥

## ५३२. के ॥ ६ ॥

केवति च साम्नि न वर्धते । इन्द्रग्रीवायाम् ( आ. ६.२.१९ ) के ॥ ६ ॥

## ५३३. अघोषादी नडिनोर्भिष्वगौ ॥ ७ ॥

अघोषादि ( दिनी ? ) अन्त्येऽक्षरे न [4]वर्धतेऽडिनोः प्रत्यययोः । [5]स्तौभिकेष्वप्रथमे प्रत्यये । [6]दिदेधक ( ५४ ) चचेततुः ( १५४ ) शतक्रतुः ( २५७ ) अपत्वचम् ( ४९१ ) व्रतस्पुपः ( २३३ ) समाशवम् ( २४५ ) शचीपते ( २५३ ) अडिनोः-? ऊर्जा ( ३६ ) [7]शतक्रतुम् । ( १५५ ) यएतश ( २६८ ) [8]उपास्वासा ( ८.१.२३ ) मरुत्वते ( ४६९ ) अघो-

1. इतः प्रभृत्यग्रिमसूत्रभाष्यगत वर्धतेपर्यन्तं घ. न.
2. अन्ते. ग.
3. वसेनभिः ग.
4. वर्धते क. घ.
5. स्तौभिष्वक्षरेषु. क. ख. ग.
6. दीध. क. ग.
7. शतक्रतुः क.
8. उपास्त ग.

पादी नडिनोर्भिष्वगौ ॥ ७ ॥

## ५३४. वि ॥ ८ ॥

वकारिणः पर्वणः [1]इणः परोऽन्त्यो न वर्धते। [2]वलादधि ( ३.२.१४ ) पिबाइमम् ( ५.२.१६ ) [3]पिबातुव० ( ४.१.११ ) पताइ-पिबाऽ३ओऽ२३४वा ( ११.१.४ ) बाधते (४४०) ह्रस्वस्य वृद्धिप्रतिषेधः। वि ॥ ८ ॥

## ५३५. वि ॥ ९ ॥

विशब्दश्च न वर्धते। आविवासाऽ२३० ( २.१.२ ) तुविकूर्मिम् ( ३५४ ) प्रदाइविये ( २.१.२५ ) रथंविष्व (५५४) प्रथमोचम्। वि ॥९॥

## ५३६. असु प्रथमात् ॥ १० ॥

असुशब्दः प्रथमात्परो न वर्धते। इन्द्रसोमम् ( १९१ ) छयापवस्व ( ४६८ ) इन्द्रसोमः। मान्यस्मै ( ३२२ ) प्रथमादिति ? सहस्रधारम् ( ५८१ ) [4]रथीरसि ( ४१ ) कृष्टिनो विशेषः। ऋतावसो ( २५५ ) न ओजसा ( ४६९ ) नडिनोर्भिष्वगावित्यधिकारः। असु प्रथमात् ॥ १० ॥

॥ इति तृतीयो दशकः ॥

---

1. इकारिणः
2. वलादवि. क. वधादधि. ग.
3. पिवास्त्व. ग.
4. रथिरः सि ख.

## ५३७. धि ॥ १ ॥

[1]धकारे च न वर्धते । शुद्धंशुद्धे ( ९.२.८ ) सहस्रधारम् (५८१) विश्वादधानः ( ४६९ ) नडिनोर्मिंष्वगावित्याधिकारः । धि ॥ १ ॥

## ५३८. उणो गिपूर्वायोवत्यां नरिस्रु[2] ॥ २ ॥

उणो गिपूर्वात्परं न वर्धते । योवत्यां नरिस्रुशब्दः । सुभगभाऽ३ ( ३.१.३६ ) आदिद्वन्दा ( ८.१.६ ) धर्तारंन्या ( ८.१.६ ) अवाहन्ना ( १३.२.३३ ) उण इति ? अत्रैव । गिपूर्वात् ? तमर्तियऽ३ः ( ८.१.५ ) योवत्याम् ? त्रिणंभृ ( ३२७ ) नरिस्रुशब्दः ? हरिःसुजानः ( ५५८ ) उणो गिपूर्वायोवत्यां नरिस्रु ॥ २ ॥

## ५३९. व्यात् ॥ ३ ॥

[3]वीव्रति गीते न वर्धते । आदेः परमित्यधिकारः । आकारोच्चम् । वन्दद्वीराय ( ३६० ) [4]वीव्रति ? अर्कोपान्त्ये ( आ.२.१.३३ ) व्यात् ॥३॥

## ५४०. रौ ॥ ४ ॥

स्वरौ न [5]वर्धेते । पिबाद्रुमपू ( ५.२.१६ ) सहद्रुन्वन् ( ५४० ) सुताइमे ( ५६६ ) द्विः । यस्त इन्दो ( ४९५ ) माप्यम् । ह्रस्वस्य वृद्धि-

---

1. धकारो न. ग.
   भाष्यं घ. न.
2. पु. ग.
3. विव्रति. ग.
4. वीत्येके । काचान्त्ये. ख.
5. वर्धेते. ग.

[1]प्रतिषेधः । गोपते ( ४०२ ) [2]वसव्ये ( २९८ ) कृतविशेषत्वात् । स्वराविति ? मान्यस्मै ( ३२२ ) रौ ॥ ४ ॥

## ५४१. ह्रोवि ॥ ५ ॥

होवि च प्रत्यये न वर्धते । पुरूतामौ ( १.२.१ ) धियायूजौ ( ६.२.९ ) अगोहायौ ( १०.२.२६ ) नमाइगाइरौ ( ६.२.९ ) [3]गिराइर्नावौ ( १०.२.२६ ) इन्द्रौहो० ( ४.२.२२ ) आश्वौहो० (४.२.२२) ह्रोवि ॥५॥

## ५४२. [4]ए भेषु ॥ ६ ॥

एकारः स्तोभेष्वक्षरेषु न वर्धते । [5]अस्माभ्यमूतयेमहे ( १० ) शचीपते ( २५३ ) पात्यग्निः ( ६१४ ) स्तोभेष्विति ? पर्यूषु ( ४२८ ) ऊर्जांपते ( ३६ ) प्रथमिनीत्यधिकारः । ए भेषु ॥ ६ ॥

## ५४३. [6]स्र हृणि ॥ ७ ॥

[7]ऋकारस्सकारिणि पादे द्वैधं हवत्येव गीते वर्धते । पुरुस्पृहम् ( २९८ ) त्रहानृभिः ( ४११ ) निवृत्तानि । चतसृभिः ( ३६ ) तुग्रवृता ( ५६ ) [8]सुवार्दशम् ( ६.१.२६ ) [9]यसेनृभिः ( २७९ ) त्वर्सन्नृपन्

1. प्रतियो ख.
2. वासव्ये ख. ग.
3. गिरा.नेवौ. ख.
4. एतेषु. ग.
5. अस्मभ्यमू. हवामहे. क ग. ग. घ.
6. स्पृहृणि क. ख.
7. इकारस्य क. ऋकारस्य. ख. ग. घ.
8. सुवर्हशाम् क.
9. सेनृभिः ग.

( १२० ) प्वन्वृजन ( ५४० ) सकारिणि ? गंभृ ( ३२७ ) वोनृ (?) ( ३२० ) श्वताःपार्थूऽ३ः ( १०.२.२५ ) सृ हणि ॥ ७ ॥

## ५४४. अमवति ॥ ८ ॥

अंशब्दस्य द्वैधं अवत्येव गीते वर्धते। अस्माकम् ( २९८ ) [1]क्षारंगवे ( ११८ ) भाप्यम्–[2]छन्यम् ( २५५ ) निवृत्तानि। सुतश्राधा ( ५.१.१२ ) वृत्रश्हाना ( ७.१.२० ) पमश्स्थिर[3] ( ३२७ ) शुद्धंशुद्धे ( ९.२.८ ) समाशतम् ( २४५ ) [4]विश्वासाहम् ( १५५ ) इन्द्रसोमम् ( १९१ ) अमवति ॥ ८ ॥

## ५४५. [5]इदन्ववत्यामघोषिणः ॥ ९ ॥

इत्थमन्ववत्यामघोषिणः पर्वणो वर्धते । [6]वरिवस्क ( ५४० ) निवृत्तानि। नदीदिवः ( ४२ ) इन्द्रमभि ( १५५ ) गोन्योघाः ( ५४० ) इदन्ववत्यामघोषिणः ॥ ९ ॥

## ५४६. सुमत् ॥ १० ॥

[7]सुमदितीमौ शब्दौ न [8]वर्धेते। [9]आजातासौ ( २.१.१९ )

---

1. ह्यरंगवे क. ख. घ. श्वरंगवे ग.
2. चह्यम्. ग.
3. विश्वासहम्: ख.
4. स्थिपा क.
5. इदन्व. मै. सभाष्यमिदं सूत्रं ग. पुस्तके नोपलभ्यते.
6. वीरवस्क. ख. न.
7. सुमदिति क.
8. वर्धते. ग.
9. आजानसौ ग.

शुंम ( २९८ ) सुमत् ॥ १० ॥

॥ इति चतुर्थो दशकः ॥

---

## ५४७. उदु ह्रा ॥ १ ॥

[1]उदुग्रसंघातस्य ह्राशब्दो वर्धते । इन्द्रोराजा ( ५८७ ) उदुब्रह्माणि ( आ.४.२.९,१० ) कायमानः शुक्रिये ( आ.६.१.४ ) निवृत्तानि । अत्रच । उदु ह्रा ॥ १ ॥

## ५४८. चतुक्षिणो वृद्धाहिनि ॥ २ ॥

[2]चतुरक्षरिणः [3]पर्वणः [4]वृद्धात्परेऽन्त्ये चतुर्थिन्येव[5] गीते प्रत्यये वृद्धे[6] भवतः । दिविसम् ( ८३ ) स्तृणन्ति ( १३३ ) याहिमयू ( २४६ ) धियाविप्रः ( १४३ ) पवस्वधा ( ४६९ ) भर्तायाम् । निवृत्तानि । सुम्नाय ( ३५४ ) तुविकूर्मिम् ( ३५४ ) इन्द्रश्शवि ( ३५४ ) माभ्यम्-अस्मभ्यम् । प्रत्यु ( ३०३ ) तरणिरित्सिषा ( २३८ ) ह्रस्वस्य वृद्धिप्रतिषेधः । चतुक्षिणो वृद्धाहिनि ॥ २ ॥

## ५४९. प्र ॥ ३ ॥

प्रवतश्च पर्वणो वर्धते । पर्यूषु ( ४२८ ) स्ये चर्षणीधृतम्

---

1. उदुर्मंघातस्य. ख.
2. चतुक्षिणः ख. ग.
3. पर्वणः ग. न
4. परः ग.
5. चतुर्थान्येव ग.
6. वर्धेते भवतः परतः च.

( आ.२.१.२ ) प्र ॥ ३ ॥

## ५५०. ग्ध्यू तृतीये ॥ ४ ॥

ग्ध्यूवति साम्नि तृतीये प्रत्यये वर्धते । शग्ध्यूष्वाये ( ७.१.१० ) नियतं च निवृत्तं च । ग्ध्यू तृतीये ॥ ४ ॥

## ५५१. [1]देर्नामि ॥ ५ ॥

चतुर्थात्परस्य पर्वणः द्वैधं नाम्यवृद्धं भवति । वितानि ( ३१५ ) न स्पृशत् ( ४४१ ) गिरिजा ( ४६२ ) अप्सुदक्षः ( ४७३ ) चतुर्थात्परस्येति ? वयस्सुपर्णाः ( ३१९ ) [2]नामीति ? स्तुपज्ञु ( ३९० ) देर्नामि ॥५॥

## ५५२. युंक्ष्वा ॥ ६ ॥

युङ्क्ष्वायाश्च न वर्धते । युंक्ष्वादीनि । युंक्ष्वा ॥ ६ ॥

## ५५३. व्यं छ्विनि ॥ ७ ॥

व्यञ्जनान्तस्य द्वैधं श्विनि पर्वणि वर्धते । दावन् ( ४३७ ) [3]भरेकृतम् ( ५९० ) निवृत्तानि । वियद्वः ( ३१५ ) दुराइन्द्रम् ( ८.२.१३ ) वेनआवः ( ८.२.१५ ) [4]सेशतादीनि । ह्रस्वस्य वृद्धिप्रतिषेधः । व्यञ्जनान्तस्येति ? वावियवार्थम् । व्यं छ्विनि ॥ ७ ॥

---

1. नेर्नामि. घ.
2. नामिति. ख.
3. भारेकतम्. ग. भरः घ
4. प्रेशेतारादीनि. ख.

## ५५४. उ नजा ॥ ८ ॥

उकारस्य नजागृत्या वर्धते । स्ये-वृत्रहा ( आ.१.२.५,६ ) [1]स्तु-भिर्नृभिः । यदिन्द्रयासो (२९८) यज्ञायथायाम् । अङ्गिरोव्रताद्ये (आ.४.२.१) प्रथश्च ( ५९९ ) इन्द्रोराजा ( ५८७ ) उ नजा ॥ ८ ॥

## ५५५ [2]वण्मे ॥ ९ ॥

वण्मसंघाते [3]ओकारो वर्धते । सिमासु ( महा.२ ) निवृत्तानि । उग्रंम् । प्रियंमित्रस्य । वत्सम् । जातम् । महस्ते । सनइन्द्राय ( ५९३ ) वण्मसंघात इति ? महानाम्नीषु ॥ वण्मे ॥ ९ ॥

## ५५६. भोऽयम् ॥ १० ॥

स्तोभस्य व्यञ्जनान्तस्य द्वैधमयंशब्दवति साम्नि वर्धते । [4]स्वाशि-रामर्के ( आ १.२.३ ) रौहिणे ( आ ४.२.२० ) निवृत्तानि । आथर्वणे ( आ.१.१.२३ ) परे देवस्थाने (१.१.१६) बृहतीवामदेव्ये (आ.१.१.२५) भर्गे ( आ.२.२.११ ) शुक्रचन्द्रयोः ( आ.३.२.७,८ ) आनश्याधिकानां चतुरनुगाने ( आ.५.२.१३ ) सार्पराज्ञीषु ( आ.६.२.७-९ ) शुक्रियोपान्त्ये ( आ.६.२.२० ) [5]व्यञ्जनान्तस्य इति ? द्वारशालायाम् ( आ.६.२.१. )

---

1 त्वभिर्नृभिः ग
2. वण्म घ.
3. भयकारो घ.
4. स्वाचिरामर्के क
5. व्यंञ्जनान्त इति ख. ग.

स्तोभ इति ? कनभिः प्रभृतीनि । भोऽयम् ॥ १० ॥

॥ इति पञ्चमो दशकः ॥

---

## ५५७. आनी खि ॥ १ ॥

[1]आनीकायाया द्व्यक्षरायां न वर्धते । न जागृनि. (५१४) अहरीतान्त्ये ( आ १ १ १४ ) अभीनातीपङ्क्ते ( आ १.२.२४ ) तास्विन्द्रयोथ ( आ ३.१ ३,४ ) आनी खि ॥ १ ॥

## ५५८ [2]विस्वरात् ॥ २ ॥

निस्वरात्परेऽन्त्ये न वर्धते । अन्धस्वरस्येत्यधिकारः । पभादीनि ।
१ २     २          १२ ख २१          २ —१ २
ताओऽ१जम. ( ३ २ १५ ) णाभुदरौ ( ३ २ २३ ) त्सुनाऽ२जिपु
         १ ग २              १ ग २
( ११.१ २१ ) ताअसुरा ( १६ १.३५ आदिपु ) आहर्यता ( १६.१.३५ )

ह्रस्वे निवृत्तिः । निस्वरात् ॥ २ ॥

## ५५९. [3]द्विहार्त् ॥ ३ ॥

द्विःकृष्टपरे[4] पर्वणि द्वैधं हात्परमेव न वर्धते । तमश्हविः ( ५१२ ) आहर्यता ( ५५१ ) तुह्ररयः (५६६) ह्रस्वे निवृत्तिः । निवृत्तानि । सान्यंशुर्म
      १ २
( ४७३ ) त्स्वभूऽ१पा० ( ७ २.७ ) न्वॉयः ( ५१२ ) दधिरेपुरः ( ८८ )

---

1 अनीस्यायाम् क ग
2 सूत्र घ न
3 निवृत्तानिपर्यन्त घ न टि हार्त् मै पु
4 कृष्टे पर्वणि परे स

द्विःकृष्टपरे ? रयिंपिशम् ( ५१७ ) द्विहींत् ॥ ३ ॥

## ५६०. उखिड्भ्याम् ॥ ४ ॥

उकारोपान्त्यायामृचि न वर्धते । मदिष्ठया ( ४६८ ) ताअसुरा ( १६.१.३५ ) उखिड्भ्याम् ॥ ४ ॥

## ५६१. नवि ॥ ५ ॥

नवकारपरे प्रत्यये न वर्धते । [1]मघोर्नवा ( ४४ ) इन्दवाउवा२३० ( १३.२.१७ ) [2]गोन्योघाः ( ५४० ) अन्नये । नवि ॥ ५ ॥

## ५६२. [3]एप्रथमे ॥ ६ ॥

[4]एशब्दादिन्यां (?) प्रथमे स्वरे प्रत्यये वर्धते । वामर्तायाऽ२३ः (८.१.२६ ) माईऽ१माहाऽ२३ ( ११.१.१० ) [5]स्वधारया ( ४६९ ) एशब्दादिन्याम् ? ताअसुरा ( १६.१.३५ ) प्रथम इति ? शम्बरंमदे ( ३९२ ) मृज्यायाम् । ए प्रथमे ॥ ६ ॥

## ५६३. उपान्त्यमञ् ॥ ७ ॥

उपान्त्यं वर्धते पदान्तवतः पर्वणः । विस्वरात्प्रथम इत्यधिकारः । द्रमूतये ( १६३ ) संगृभाय ( १६७ ) स्वभक्षतः ( २६७ ) मधारया ( ४६८ ) हवामहे ( १६३ ) एहीम् । शतक्रतो ( ३६६ ) विचर्षणे (३६६)

---

1. घोन्योघाः ख. ग.
2. मघोर्पर्नपन्द वाडवा. ख
3. प प्रथमे क ख ग. घ.
4. पकारादिन्याम्. ग.
5. स्वाधाराय. ग.

१ २ २
अरूरुचत् ( आ.३.१.९ ) प्रथमे ? पभादीनि । पदान्तवतः[1] ? एभिर्न्नर्धा
१ — १
( ७ ) अस्तित्वा ( ३४५ ) क्रतूऽ२म्पुनाइ ( १०.१.२६ ) [2]धनसा (२५१)
[3]प्रथम इति ? उपोपु । उपान्त्यमणु ॥ ७ ॥

## ५६४. [4]असु ॥ ८ ॥

असुशब्दो वर्धते । एहीमस्य ( १५९ ) सखायस्सो ( १५६ )
असु ॥ ८ ॥

## ५६५. न म्णि ॥ ९ ॥

न म्णिलिङ्गे पर्वणि वर्धते । अर्यम्णे ( २५५ ) स्यार्यम्णः ( १९२ )
स्ये-मह्त्रिीणायाम् । एकपर्वत्वात् । [5]अभीनवेति रहस्ये ( आ.१.२.२४ )
न म्णि ॥ ९ ॥

## ५६६. अयु प्रथमिभ्याम् ॥ १० ॥

अयुशब्दः प्रथमिभ्यामुपहितो वर्धते । अश्वयो ( १८६ ) यजग्म
( ३५२ ) आतामाम । प्रथमिभ्याम् ? तदग्नये ( ८६ ) वतातये ( ३९१ )
२ १ १
सिधारया (१४.१.८) धप्रनूनम् (४६१) पदान्तवतः [6]पादादिरित्यधिकारः ।
अयु प्रथमिभ्याम् ॥ १० ॥

॥ इति षष्ठो दशकः ॥

---

1. पदान्त एव. ख.
2. ममया इत्यधिकः क. ॠ इत्यधिकः ख. ग.
3. अप्रथम ख.
4. अशु. ग
5. आभीनवोति. ख. ग.
6. उपप्रादिरित. पदादित्य० ग.

## ५६७. अणोऽय ॥ १ ॥

पादाद्यस्य पर्वणोऽयशब्दो वर्धते । प्रगायत्राः ( २७१ ) पुनानाय ( ५६८ ) अण इति ? इन्द्रमभिप्रगायत ( १५५ ) शिशुम् ( ५६८ ) भाष्यम्-[1]उद्वदर्शि ( ? ) अणोऽय ॥ १ ॥

## ५६८. नीचादि व्यन्ते ॥ २ ॥

२ १
नीचादिस्थं वर्धते मन्द्रवृद्धान्ते पर्वणि । सतश्रायाइ ( ३.१.२० )
२ ११
नमेगाइरा ( ६.२.८ ) पणिप्राः[2] ( ३२८ ) समुद्रेवा ( ५१७ ) नीचादिति ?
१
वाइश्वामिया ( १.२.४ ) इस्थम् ? हव्यवाहम् ( १२ ) मन्द्रान्ते ? [3]हतो
२ १
दिवः ( ३६५ ) वृद्धान्ते ? धौमदिरे ( ४०७ ) नियत्रिणाम् ( १०.२.२७ ) नीचादि व्यन्ते ॥ २ ॥

## ५६९. णीथ ॥ ३ ॥

२ १　　　　　　　२१
णीथसंघातवति साम्नि वर्धते । तमद्राइवो ( ९.१.३० ) रथाइनाम्
२ ११
( ९.१.१९ ) तृतीये । णीथसङ्घातवति ? विपागिरा ( ८.१.६ ) णीथ ॥३॥

## ५७०. वेनस्य ॥ ४ ॥

वेनस्य नीचाद्वर्धते । वेन आये ( ८.२.१५ ) वेनस्य ॥ ४ ॥

## ५७१ लघोर्मरुत्वताया: ॥ ५ ॥

लघोः परं मरुत्वताया [4]न वर्धते । स्यमूप्रभृतीनि । लघोरिति ?

---

1. उद्वशि ख.
2. पणिप्रयाः ख.
3. हतादिवः ग.
4. न. घ. न.

यद्धधादीनि । लघोर्मरुत्वतायाः ॥ ५ ॥

## ५७२. कृष्टे ॥ ६ ॥

कृष्टे चोपान्त्यं वर्धते । नीचादित्यधिकारः । वाघाङ्गीऽ२ः ( २.१. २६ ) पिबासोमाऽ२म्[1] ( ६.१.२२ ) वाजीनाजाऽ२म् ( ७.२.२८,२९ ) दूपेमाराऽ२ ( ९.२.१२ ) प्रभृतीनि । कृष्टे नीचादिति ? द्विपात् ( ३६७ ) [2]कृधीनः ( ४७९ ) उपान्त्यमिति ? वायोरनीप्रभृतीनि । कृष्टे ॥ ६ ॥

## ५७३. अपश्विनः ॥ ७ ॥

अपश्विनश्च कृष्टे वर्धते । यज्ञा ( ३५ ) समस्यामाऽ२ ( ४.१.१७ ) सुनीतीतूऽ२ ( ३.२.२८ ) प्रतीनाएऽ२ (६ २.३१) [3]पर्यूत्वाचे (११.२.१६) पूर्वांगाऽ२त् ( ७ २.३० ) अपश्विनः ॥ ७ ॥

## ५७४. उद्यादेः [4]कार्ष्यम् ॥ ८ ॥

द्वितीयादेः पर्वणः कार्ष्यं वर्धते । [5]जरमाणम् ( ३७४ ) भिर्भयमानाऽ२३ः ( ९.१.४ ) निवृत्तानि । ध्मास्वजकृत् ( ७.२.१२ ) उद्गुप्रभृतीनि । रुद्रस्य ( ४३३ ) ज्यादेः कार्ष्यम् ॥ ८ ॥

---

1. पिबासोमम् ग
2. कृधीनादीनि ख
   कृधीनादिति. ग
3. उपर्यू० ख.
4. कार्ष्योम् ख
5. जरामाणम् ग.

### ५७५. [1]व ॥ ९ ॥

२ १ — २२१र —
वशब्दो वर्धते। नहित्वादाऽ२त्र (१०.१.१४) योदेवास्याऽ२ (१२.१.४२) व ॥ ९ ॥

### ५७६. [2]द्रगो ॥ १० ॥

२ १र — २११
द्रगोमतारूपे च वर्धते। ब्रह्माणआइन्द्राऽ२म् (१२.१.२) एष-
—
प्रकोशोऽ२ (१६.२.१३) द्रगो ॥ १० ॥

इति सप्तमो दशकः ॥

---

### ५७७. [3]भिण्यां घमौ ॥ १ ॥

भकारिण्यामृचि द्वैधं दीर्घं चाकारो (१) वर्धते। यदिन्द्र (२६२) इन्द्राग्नी (२८१) इमेत इ (३७३) तवत्य (४६६) परिप्रुक्षम् (४९६) प्रकाव्यासु (५२४) निधृत्तानि। हिनस्सुतम् (१९५) त्वमञ्जली (२६०) क्षोणीरिव (३७३) नांजनिमा (५२४) इन्दुरिन्द्र (५५७) भकारिण्याम्। १ १म
यज्ञादीनि। जनयताऽ२३ (१५.२.१२) जनयताऽ२३ (१५.२.१३) भाष्यम्—हया (५२२) त्वंनः। भिण्यां घमौ ॥ १ ॥

### ५७८. नामिनि त्रेषु ॥ २ ॥

नामिन्यक्षरे प्रत्यये द्वैधं त्रैवत्यामेव [4]लघु वर्धते। द्विः। इन्द्रंवयम्

---

1. सूत्रभाष्ये ख. न.
2. द्वयोः घ.
3. सूत्रं ग. न.
4. द्विलघु. ख,

( १३० ) सनद्रयिम् ( ४९६ ) निवृत्तानि । तास्सुतसोऽ२ ( ६.२.२ ) प्रथमंपूऽ२ ( १२.१.४२ ) शुचिबन्धूऽ२ः ( १५.१.३३,३४ ) परिद्वादशे ( १४.२.१२ ) लब्धिति ? इन्द्रमर्भे ( १३० ) नामिनि त्रेषु ॥ २ ॥

५७९. [1]दन्त्ये ॥ ३ ॥

दन्त्ये प्रत्यये द्वैधं नामिन्येव वर्धते । सुनीतीतूऽ२ ( ३.२.२८ ) ईरसे ( ४२८ ) निवृत्तानि । जातओजसः ( १२० ) नसहस्राय ( २९१ ) सोममिन्द्राय ( २८५ ) द्विः । जनयताऽ२३ ( १५.२.१२ ) जनयताऽ२३ ( १५.२.१३ ) भाष्यम्-प्रियंमित्रेषु ( ३५ ) दन्त्ये ॥ ३ ॥

५८०. न त ॥ ४ ॥

न तशब्दो वर्धते । प्रतितद्धाऽ२३ ( १०.१.१४ ) अप्स्वन्तरा ( ५१२ ) [2]शेशतया ( ५५७ ) न त ॥ ४ ॥

५८१. ह ॥ ५ ॥

हशब्दवतः पर्वणो दन्त्ये [3]न वर्धते । हवन्ते ( ३१८ ) चित्रमहह ( ३४५ ) समहसाऽ२ः ( १०.२.२८ ) हवतः ( हशब्दवतः ? ) वृहन्नधि ( ५५४ ) दन्त्ये ? पुर्हरयः ( ५५५ ) ह ॥ ५ ॥

---

1. सूनं. ग. न
2. देशद्वितया. क.
3. न ग. न.

## ५८२. ए भघोष रे ॥ ६ ॥

स्तोभघोषपरे वर्णे प्रत्यये [1]द्वैधमेकारवत्यामृचि वर्धते । [2]भकारिण्या-मित्यधिकारः । वृषाम ( ५५९ ) प्रधन्वासु ( ५६७ ) निवृत्तानि । श्रुष्ट्यग्ने ( १०६ ) [3]स्तोमानाम् ( १३९ ) पान्तम् ( १५५ ) क्वेयथ ( २७१ ) स्वादि ( ४६८ ) प्रसोमदे ( ५१४ ) दयित्नवे ( ५४५ ) महिना (५७०) वरौहो२३४–वा (५.२.१७) रक्षसोदहादिः विशेषात् । घोषपरे ? तमिन्द्रम् ( ११९ ) अतीहिम[4] ( २२३ ) अयंपूषा ( ५४६ ) महित्रीद्वितीये ( ५.२. १८ ) तिधीतयः ( ४६१ ) इन्द्रायेन्दोऽर्थम् । ए भघोष रे ॥ ६ ॥

## ५८३. हवि [5]नजारायुक् ॥ ७ ॥

होशब्दे प्रत्यये वर्धतेऽजारायुक्तस्य[6] पर्वणः । त्वते ( ५२० ) तमी ( ५२० ) यज्ञायाम् । स्वादिष्ठयौहो२ ( १२.२.१६ ) इन्द्राइ । अजारायुक्त-स्येति ? [7]वरौहो२ ( ५.२.१८ ) पुनानौहोइ ( १७.१.१४ ) इपऽहो२इ ( ७.२.६ ) हवि नजारायुक् ॥ ७ ॥

## ५८४. अचु घेर्वात्सु ॥ ८ ॥

[8]आदिर्दीर्घेऽलिङ्गायां चावत्स्वक्षरेषु न वर्धते । स्तियाऽ२ ( १५.१.

---

1. द्वैधमोकार. घ.
2. इकारिण्याम्. ख. ग.
3. गोमानाम्. ग.
4. अत्रैव. घ. पुस्तके भाष्यं समाप्तम् ।
5. नजारायायुक् ख.
6. अजारयुक्तस्य. क.
7. पुरौहो क. परौहो. ग. वरौहो. घ.
8. कादिर्दीर्घे. क.

१३ ) स्तियाये ( १०.२.८ ) जताऽ२इ (७.२.६) [1]यसाऽ२३ (१६.२.१३) द्विपाऽ२ः ( ५.२.२० ) सवादीनि । दीर्घ इति ? घृऽ३ताइनाऽ२ ( २.२.५ ) याजाऽ२ ( ३.१.१८ ) गाहीऽ२ ( ५.२.४ ) अछिद्रायाम् ? जगृह्माते ( ३१७ ) चावस्त्विति ? आमन्द्रेरन्त्ये ( ६.२.२९ ) युंक्ष्वाहि ( ३०१ ) अचु येचास्तु ॥ ८ ॥

## ५८५. विष्णोर्गाय ॥ ९ ॥

विष्णोस्संघाते गायशब्दो वर्धते । गायाऽ२-सुताइसाऽ२३४चा ( ३.२.१ ) निवृत्तानि । गायेति ( ? ) विष्णोः ? अवश्मशादीनि ( २२८ ) विष्णोर्गाय ॥ ९ ॥

## ५८६. व्यामूर्म्मिण्याम् ॥ १० ॥

ह्रीव्यामूर्म्मिण्यां न वर्धते । [2]वचाऽ२हाऽ२३४साः ( ५.१.९ ) पुरूऽ२-वाऽ२३४ग्नः ( ६.१.३२ ) निमाऽ२३-होऽ२३४वा ( १३.१.१७ ) ह्रीव्याम् ? रूवाऽ२३त्-सीदाउवा ( १४.१.११ ) मादाऽ२ः-देवाऽ३न्होइ ( १६.१.१९ ) ऊर्म्मिण्याम् ? घतश्चन ( २८४ ) व्यामूर्म्मिण्याम् ॥ १० ॥

॥ इत्यष्टमो दशकः ॥

---

1. यसु. क. घसा. ख.

2. विता. ख.

## ५८७. घं शतारे ॥ १ ॥

शतापरे च दीर्घं वर्धते । त्राताऽ२ ( १२.१.१५ ) तेजाऽ२ ( १२.२.१० ) दाइनोऽ२-हिराऽ२४५ ( १४.१-२८ ) गिरस्तोमा ( २४१ ) परिधीऽ२ ( ५१६ ) शतापरे ? क्षोणीरिव (३७३) शत्रसाप्राऽ२ (१२.१ ४२) नोअन्धमा ( ४९६ ) पुहरयः ( ५५५ ) घं शतारे ॥ १ ॥

## ५८८ मन्तेऽश्वस्य ॥ २ ॥

[1]मकारान्तपरेऽक्षरे प्रत्ययेऽश्वसंघातस्य वर्धते । दसे समिन्धुभिः ( ३८४ ) देवेभ्यः सो ( ४२१ ) निवृत्तानि । इन्द्रंवद्व ( ३७७ ) रणागाः ( ४२२ ) धुमाम्नादीनि । उप-स्तुतोऽ२ ( ३.१.२७ ) कर्डम्ध्य५क्ताः ( ११.२.२५ ) अग्निसोमासः ( ५१८ ) अभ्यर्षाऽ२३४ ( १७.१.३८ ) [2]समहसः ( ३९५ ) समुद्रपदं [3]गाचो त्र्यक्षरायाः (?) मन्तेऽश्वस्य ॥ २ ॥

## ५८९ बोधु ॥ ३ ॥

बोधुलिङ्गायामृचि वर्धते । उस्रिया ( ४६३ ) वसोर्मन्दा ( २३६ ) त्वंनिप्रः ( ५१९ ) सुपर्णो धा ( ४१७ ) अन्वये । बोधुलिङ्गायाम् ? शुपगूतिः ( २६३ ) चित्रइत् ( ६४ ) श्रोअयासीत् ( ५५७ ) आरे अस्मत् ( २८४ ) आरात्ताद्वा ( २८४ ) एवाहिवीरः ( ३८५ ) सोममिन्द्रा ( २८५ ) द्विपात्

---

1 मकारयान्त घ
2 सामहसः घ.
3. वचः ख. ग.

( ३६७ ) शतंभूमिः ( २७८ ) नतु । अस्माकमद्य ( २४१ ) तथायोनिमभिनिवृत्तत्वात् । बोधु ॥ ३ ॥

## ५९०. भः ॥ ४ ॥

स्तोभो वर्धते । पुंस्यादीनि । वेनः ( ३५५ ) पतिसाम्नि ( आ.१.२.१२ ) विश्वेदेवायाम् ( आ.४.२.८ ) निधनानि । सुतम् । प्रध । परिस्वानः ( ४७५ ) पुरोजिप्रभृतीनि । भः ॥ ४ ॥

## ५९१. इनः ॥ ५ ॥

अभिगीतात्परस्य द्वैघं दीर्घं चाकारो ( ? ) वर्धते । चादक्षासाऽ२इ ( १.२.२४ ) [1]तूवन्नोजीऽ२ ( ६.१.२३ ) अदिद्वोदेऽ२ ( २.१.२४ ) माधमाधाऽ२म् (७.२.३५) रांवृपाभाऽ२म् (१७.२.२०) अध्वर्योअन्धासाऽ२ः ( १०.२.६ ) तापराइपिश्चाताऽ२ः ( १७.२.१४ ) यामिमरुतोब्रह्मणस्पाताऽ२इ ( २.१.१५ ) घमान्विति ? यत्रिप्ष्य ( ३७ ) आदाशुपे (४०) तामाऽ१हुवेऽ२ ( २.१.८ ) यदङ्गिभिः ( ५७ ) द्राकेऽ१शिमीऽ२ः ( ७.२.२ ) भाप्यम् स्वताऽ१इमेऽ२ ( १७.१.३ ) इनः ॥ ५ ॥

## ५९२. न ऐे ॥ ६ ॥

न ऐलिङ्गायामृचि वर्धते । इन्द्रमच्छ ( ५६६ ) न ऐे ॥ ६ ॥

---

1. तूवान्नोर्जाः ग.

## ५९३. मम ॥ ७ ॥

[1]ममशब्दो न वर्धते। गिराम्मम ( ५२ ) गिरोत्वर्धन्तु ( २५० ) [2]ममशब्द इति ? ब्रुवीमहि ( ४०३ ) मम ॥ ७ ॥

## ५९४. निणो भे[3] ॥ ८ ॥

नकारिणोऽक्षरात्स्तोभे न वर्धते। वृत्रायहन्तवे ( ११९ ) देवाँ अच्छ ( ४६१ ) जनयन्त्सूर्यम् ( ५३४ ) अन्तरिक्षाये ( आ.१.१.९ ) नकारिणः ? [4]वारंयत्पूतः (५३४) स्तोभे ? [5]वानप्राक्षाऽ२३म् (१७.२.१५) निणो भे ॥ ८ ॥

## ५९५. दधे यमिन्याम् ॥ ९ ॥

दधे प्रत्यये यमिन्यामृचि न वर्धते। पन्ययाऽ२ ( १.१.७ ) वक्रुष्टयाऽ२ ( १.१.२० ) नायक्रमीऽ२त् ( १.२.१५) यमिन्याम् ? विश्वासुगीषु ( १७० ) म्योमघवा ( २३५ ) दधे ? [6]चनादधि ( ५२ ) दधे यमिन्याम् ॥ ९ ॥

## ५९६. स्स्तयुग्गुरोः ॥ १० ॥

[7]स्वरस्तयुक्तो गुरोः परो वर्धते। त्वावृषभासुते ( १६१ ) योमर्ता-

---

1. मंशब्दः क.
2. ममन्धीशब्दः क. मम इति ख.
3. ते ग.
4. वारिणंयत्पू. घ.
5. वेनाप्राक्षाम्. ख.
6. चानादजि घ.
7. स्वरयुक्तः क. ख. ग.

याऽ२ः ( ७.२.६ ) स्वाधाऽ१रायाऽ२ ( १३.१.३१ ) अप्तुरम् (५८०) द्विः। स्वरग्रहणमिति ? अत्रैव । तद्युक्तः ? यविष्ठ्यादीनि । गुरोरिति ? ब्रह्मकृते ( ३८८ ) भूर्ति न मरा ( ५७३ ) रस्तयुग्गुरोः ॥ १० ॥

॥ इति नवमो दशकः ॥

## ५९७. दोषादिः ॥ १ ॥

दोषावस्ताया आदिर्वर्धते । दोषादीनि । आदिः कृष्टे येत्यादीनि । दोषादिः ॥ १ ॥

## ५९८. ग्निद्वा गुरु ॥ २ ॥

अग्निद्ताया: परस्य पर्वणः द्वैधं गुरुर्वर्धते । चर्षणीनाम् ( १४४ ) निवृत्तानि । इदस्तु नः ( १४० ) पुरूवसो ( १४६ ) ग्निद्वा गुरु ॥ २ ॥

## ५९९. अम् ॥ ३ ॥

अंशब्दश्च गुरुर्वर्धते । यंसमित् (५९) निवृत्तानि । समुद्रेवाचमिन्वसि ( ५१७ ) अम् ॥ ३ ॥

## ६००. वृहायाः ॥ ४ ॥

वृहायाश्चांशब्दो[1] न वर्धते । त्वंनाऽ३२उवाऽ३ ( ८.२.१२ ) निवृत्तानि । वृहादीनि । वृहायाः ॥ ४ ॥

---

1. जंशब्दः क.

## ६०१. ओर्हिरे ॥ ५ ॥

उकारात्परं हकारपरेऽक्षरे प्रत्यये वर्धते । [1]सोमोयउत्तामाऽ२१२मृ-हाबीऽ२ः ( १४.२.११ ) आयुपगित्येते ( ४८३ ) महेतुनः ( ५०९ ) बोधुलिङ्गायामित्यधिकारः । ओर्हिरे ॥ ५ ॥

## ६०२. [2]हि ॥ ६ ॥

हकारपरेऽक्षरे प्रत्यये वर्धते । [3]ऐऽरहीऐऽरहीऽश्या (१३.२.१३) हकारपर इति ? [4]एहिहाऽरइ-यमुत्वा० ( ४.२.२६ ) हि ॥ ६ ॥

## ६०३. विश्वे ॥ ७ ॥

विश्वेसंघाते च न वर्धते । विश्वेदिन्द्र ( २६७ ) आदित्यात्मनि ( आ.६.२.२१ (?) ) विश्वे ॥ ७ ॥

## ६०४. चि ॥ ८ ॥

चिशब्दवति साम्नि न वर्धते । और्वभृगु ( १८ ) घृणामती (५५९) चित्रन्दे ( ६२९ ) चि ॥ ८ ॥

## ६०५. व्यन्यमिनि दे ॥ ९ ॥

मन्द्रान्तस्य कृष्टे प्रत्यये वर्धते यमिनि पादे । उपत्वाग्ने ( १४ )

---

1. सोमोयउत्ताऽ१माऽ१२३४मृ ग.
2. हिष्यते । हिएेभ्यभ्यहीभ्यभ्य इ. क.
3. एभ्यभ्य ही घ याभ्य रा. याकाररहितः ग. पाठः
4. एऽ१रहीऽ१२३४. ग.

बृहद्भिः ( ३७ ) रायेअग्ने ( ९३ ) अरिरग्ने ( ९७ ) ब्यन्ते १ देवैरग्ने ( ५० ) यमिनि १ अहयेह ( ४३९ ) प्यश्सु ( १४१ ) आविर्मर्या ( ४३५ ) त्नधाममि ( ४६४ ) [1]निवृत्तत्वात् । ब्यन्यमिनि दे ॥ ९ ॥

## ६०६. सि ॥ १० ॥

[2]सकारिणः पर्वणो वर्धते । मन्द्रान्तस्य क्रुष्ट इत्यधिकारः । सहस्यते ( २१ ) त्वेपस्ते ( ८३ ) [3]तोदस्येव ( ९७ ) क्वेय ( २७१ ) सृजद्धारादीनि । त्वमस्माकम् ( २८ ) पुनानस्सो ( ५११ ) वरिवस्कृ ( ५४० ) सकारिणि ( णः १ ) १ अदियुतत् ( ४६४ ) अध्वर्यो ( ४९९ ) [4]द्रवा पिन ( १५९ ) सि ॥ १० ॥

॥ इति दशमो दशकः ॥

---

## ६०७. उत्तमिन्यसु ॥ १ ॥

[5]उत्तमवति पर्वणि द्वैधमस्वति गीते वर्धते । [6]त्वमस्माकमादीनि । निवृत्तानि । प्यश्सु ( १४१ ) देवस्य । सवीमनि ( ४६४ ) प्रसोमदेव ( ५१४ ) तमन्धसः ( ४६७ ) प्रधन्वा ( ५६७ ) प्रपुनानायाम् ( ५७३ )

---

1 निन्तान् क घ
निवृत्तान् ख ग
2 सकारिण्याः ग
3 तेदस्यैव घ
4 द्रावापिया ग.
5 उत्तवति ग
6 त्वमस्माकादीनि क. ग.

ससु ( ५८७ ) उत्तमिन्यसु ॥ १ ॥

६०८. दात् ॥ २ ॥

पदात्परस्य वर्तिनः ( ? ) द्वैधमस्वति गीते वर्धते । त्वमस्माकमादीनि ( निवृत्तानि ? )। परिस्तोतारआम ( २६१ ) तसुक्रतुः ( ४६४ ) स्वधारया ( ४६९ ) उत्सोदेवः ( ५११ ) [1]यदिन्द्रया ( ३१०-)दात् ॥ २ ॥

६०९. यन्नघोपे ॥ ३ ॥

[2]इअन्तस्य पर्वणोऽघोपे[3] वर्धते । ऊर्ध्वऊषु ( ५७ ) सुरूपकृत्नु ( १६० ) यद्वाम ( ३८४ ) तिविषुतः ( ४१७ ) हरिरेति ( ४७१ ) पतश्रुते ( २७२ ) [4]यन्तस्येति ? पुरुत्वाद्य ( ९७ ) अघोपे ? [5]नवामहे ( २३६ ).यन्नघोपे ॥ ३ ॥

६१०. न स्तो ॥ ४ ॥

न स्तो लिङ्गायामृचि वर्धते । स्तोतारआ ( २६१ ) यदिन्द्रया ( ३१० ) न स्तो ॥ ४ ॥

६११. दुः ॥ ५ ॥

दुश्शब्दवति साम्नि वर्धते । इन्दुर्वा (५४०) अन्वये ? दुः ॥ ५ ॥

---

1. यदिन्द्राया क.
2. इअतेस्य ख.
3. घोपे. ख.
4. इअन्तस्येति. ख.
5. नवामदे. ग.

### ६१२. नीचे ॥ ६ ॥

नीचे प्रत्यये न वर्धते । [1]त्वमस्माकमादीनि । नीचे ॥ ६ ॥

॥ इत्येकादशो दशकः ॥

॥ इति [2]सामतन्त्रभाष्ये षष्ठः प्रपाठकः ॥

---

॥ अथ सप्तमः प्रपाठकः ॥

### ६१३. दि दु ॥ १ ॥

चतुर्थो वर्धते उदुह्यस्य पर्वणः । नीच इत्यधिकारः । जारा (१.१.३४) अग्नेहाउ (२.२.२०) स्तोनहीहाउ (२.२.२२) आत्रा (४.२.४) [3]गावः (३.२.६) [4]पाहि० (८.१.८) तंवः प्रभृतीनि । नीच इति ? आदिरप्रत्नादीनि । उदुह्यस्येति ? [5]वृह । दाऽ२३४र्शोहाइ (१.२.१६) महाऽहि (३८१) शग्ध्यूपु (२५३) वयमुत्वा (१५७) सोमानाम् (१३९) वास्तो प्रभृतीनाम् । न यथर्चादित्यधिकारः । तंवोद (२३६) प्रेत्य (३५२) आते (४१९) तंवः (५६९) इत्यावृत्तसंघातः । दि दु ॥ १ ॥

### ६१४. गुभि ॥ २ ॥

त्र्यक्षरस्य पर्वणः द्वैधं भिशब्दो वर्धते । स्ये-अभित्वायाम् ( आ.१.

---

1. त्वमस्माकादीनि ख.
2. सामतन्त्रे क. ख. ग. घ.
3. गावा: क.
4. पाहि. क. न.
5. वृहार्शोहाइ. ग.

१.१४ ) निवृत्तानि । तुभ्यम् ( २१३ ) प्रयत् ( ४९१ ) जनत् ( स्तोभ ) [1]क्रीडन् ( ५८४ ) [2]ससु ( ५८२ ) वसिष्ठाः ( ६.२.१८ ) इन्द्वाः ( १६.२.८ ) हरयाः ( १६.२.८ ) अग्ने (८१) तर (२३८) [3]मानः (११०) योनः ( ४०० ) एषाहाउ ( १७.२.३२ ) ह्रस्वस्य वृद्धिप्रतिषेधः । हावात्रा-दीनां स्तोभाद्विशेषः । गु मि ॥ २ ॥

## ६१५. भादार्चिकम् ॥ ३ ॥

आर्चिकस्य परं स्तोभादेव परं वर्धते । हावात्रादीनि । स्तोमात् ? तुभ्यं प्रभृतीनि । आर्चिकस्य निवृत्तिः । स्थाऽ५इरा (१.१.२२) [4]रिपादौ ॥ भादार्चिकम् ॥ ३ ॥

## ६१६. नामि [5]ह्रसणादिन्याम् ॥ ४ ॥

स्तोभात्परस्य नामिनो द्वैधं ह्रस्वसर्णादिन्यामृचि वर्धते । श्रत्ते ( ३७१ ) [6]अञ्जते ( ५६४ ) त्रिरस्मै ( ५६० ) निवृत्तानि । वित्वत् (६८) उक्थे ( ६८ ) वयमिन्द्रा ( १३२ ) द्विः । भाष्यम्-महाहाऽइन्द्राः ( ५.१. १४ ) आनोविश्वा ( २६९ ) वृषा ( ४६९ ) विश्वादधाहाउ (१२.२.२६) [7]हाउपिबा ( १०.२.३२ ) हाउगृणाइ ( १०.२.१८ ) नामीति (नामिनः ?) हावात्रादीनि । नामि ह्रसणादिन्याम् ॥ ४ ॥

---

1. क्रीउस्सु.
2. ससु. ख. ग.
3. मानो क. ख. ग.
4. रिपाशै. ग.
5. ह्रटवसनादिनाम्. घ.
6. संयोगादिर्न भवति । कथमे-तदुदाहृतम्.
7. त्विन्द्राउपिब. ख. ग.

## ६१७. जि स्थादिन्याम् ॥ ५ ॥

ज़िलिङ्गायामृचि [1]अन्तस्थादिन्यां न वर्धते । वित्वत् ( ६८ ) प्रतुद्रव (५२३) स्ये-स्वादोरित्थाणाम् (आ.१.२.२१;२.१.९) ज़िलिङ्गायाम् ? वयंघत्वा ( २६१ ) यथागौरः ( २५२ ) वयमिन्द्र ( १३२ ) श्रत्ते (३७१) अन्तस्थादिन्याम् ? पुरोजि ( ५४५ ) असर्जि ( ५४३ ) हाउ-जाइपु ( ११.१.२० ) ह्रस्वस्य वृद्धिप्रतिषेधः । जि स्थादिन्याम् ॥ ५ ॥

## ६१८. एनाया अध्व[2] ॥ ६ ॥

( एनाया ) अध्वलिङ्गायामृचि वर्धते । मूर्धा ( ६७ ) एह्यूपु ( ७ ) आयाहि ( ४०२ ) आनोविश्वा ( २६९ ) अध्वलिङ्गायाम् ? नमसा ( ४५ ) अघ्नयों ( ४९९ ) एनाया अध्व ॥ ६ ॥

## ६१९. असस्निनः[3] ॥ ७ ॥

असस्निनश्चतुर्थो वर्धते । ओग्नाइ ( १.१.१ ) मा–ना (३.१.३४) गधिप्राया ( १०.२.२६ ) स्ये-योनः । प्रसंराजादीनि । असस्निन इति ? [4]आदित्प्रत्नादीनि । उदुह्यस्येति ? गृणे (३९१) अभिसो (५१८) होऽ२३४-र्तियाः (१.१.३३;२.२.२१) हिताः (२.१.१३) ध्वराइ ( २.१.१५ ) नृभाइः

---

1. अग्नेएषा० ख.
2. अध्वा. ग. अनध्व. घ.
3. असस्निनि. क.
4. आदिवत्प्रसा. घ.

( ११.१.२३ ) पिणाइ (१२.१.४) [1]स्तोभाग्नेत्यधिकारः । भिरूप्यव्ययाम् । [2]घुचिंक्रावत इत्युत्तरार्थम् । असप्तिनः ॥ ७ ॥

## ६२०. [3]घु चिक्रावतः ॥ ८ ॥

चतुरक्षरस्य चिक्रावतः पर्वणो वर्धते । नेमिन्तष्टे (२३८) पुरोहितः ( ४८ ) चतुरक्षरस्येति ? महाꣳहि ( ३८१ ) चिक्रावतः ? द्रसद ( ३१४ ) घु चिक्रावतः ॥ ८ ॥

## ६२१. तुडि व्यादेः ॥ ९ ॥

प्रस्तावे तालव्यादेः पर्वणो वर्धते । यज्ञा ( ३५ ) योनः ( ४०० ) यस्ते ( ११६,४७० ) यदिन्द्र । वसन्तः ( ६१६ ) तालव्यादेः ? यजिष्ठम् ( ११२ ) असप्तिनः ? योविश्वा (४४) चिक्रावतः ? यदिन्द्रयाव[4] (३१०) तुडि ? शाऽ३चीप ( १०.२.१९ ) तुडि व्यादेः ॥ ९ ॥

## ६२२. [5]वं सूप्वायाः ॥ १० ॥

सर्वं सूप्वाया वर्धते । सूप्वादीनि । वं सूप्वायाः ॥ १० ॥

॥ इति प्रथमो दशकः ॥

---

1. इदं वाक्यं क न. स्तोभाग्नेत्य. ख.
2. सर्वेषु कोशेपूपलभ्यते ।
3. सूत्रभाष्ये क. न
4. घ. पुस्तकेऽत्रैव भाष्यं समाप्तम् ।
5. इवं. मै. पु.

## ६२३. [3]खिड्गुरु लघोः ॥ १ ॥

(१) उपान्त्यस्य गुरुणो द्वैधं [1]लघोः परो वर्धते । एतमुत्यम् (५८१) अप्सुदक्ष (४७३) अरिरग्ने (९७) निवृत्तानि । इन्द्रंगच्छ (४८३) समुद्रस्य (५१८) खिडिति । सुष्वा (३१६) ह्रस्वस्य वृद्धिप्रतिषेधः । खिड्गुरु लघोः ॥ १ ॥

## ६२४. [3]द्वितीयमभ्या ॥ २ ॥

द्वितीयस्य गुरुणो द्वैधमभ्या वर्धते । [4]शिशुम् (५६८) [5]गिरम् (५५७) निवृत्तानि । यदिन्द्र (१२२) उपःप्रारन् (३६७) पवस्वदे (४८३) अग्निसोमयोः (५१८) ह्रस्वस्य वृद्धिप्रतिषेधः । द्वितीयमभ्या ॥ २ ॥

## ६२५. [6]दि यजु ॥ ३ ॥

चतुर्थस्याभ्यामावृद्धं[7] यावत्यामृचि वर्धते । सखायज्ञाचतुर्थयोः (१७.१.१४;आ.३.२.१२) निवृत्तानि । अग्निप्रभृतीनि । एपस्य (५३१) ह्रस्वस्य वृद्धिप्रतिषेधः । दि यजु ॥ ३ ॥

## ६२६. तंग्वास्तृतीयात् ॥ ४ ॥

तंग्वास्तृतीयाद्वर्धते । तंवः (२३६) तंगू (१०९) तंग्वास्तृतीयात् ॥४॥

---

1. लघोः इत्यारभ्याय भाष्यांशः द्वितीयसूत्रभाष्यान्ते क. कोशे उपलभ्यते ।
2. व्यं ख. सूत्रं घ. न.
3. सूत्रं क न.
4. शुशुम्. ग
5. गिरिम्. ख
6. दियुजा. क. ख ग. घ
7. अभ्यासी. ख.

## ६२७. नद्या ह्रस्वम् ॥ ५ ॥

नद्या ह्रस्वं वर्धते । नहिवश्च ( २४१ ) यऋतेचित् ( २४४ ) इन्द्र ( २७४ ? ) । ऋचश्साम ( ३६९ ) [1]ह्रस्वमिति ? अग्नेरक्षा ( २४ ) अग्नेर्युङ्क्ष्वा ( २५ ) नद्या ह्रस्वम् ॥ ५ ॥

## ६२८. सण्योष्ठ्ये ॥ ६ ॥

सणि प्रत्यये द्वैधमोष्ठ्ये वर्धते । [2]त्वमङ्ग ( २४७ ) [3]यस्यत्यच्छम् ( ३९२ ) चन्द्रमाः ( ४१७ ) असृक्षत ( ४८२ ) निवृत्तानि । पाहिनः ( ३६ ) यौराजा ( २७३ ) महेचनत्वा ( २९१ ) अग्ने ( ३५,४४८ ) द्विः । त्वङ्ह्यङ्ग ( ५८३ ) सण्योष्ठ्ये ॥ ६ ॥

## ६२९. सन्खिडि ॥ ७ ॥

सन्ते पर्वणि खिडि प्रत्यये वर्धते । त्वमग्ने ( ६१ ) इन्द्राय पा ( ५२० ) सन्ते ? चन्द्रमाः ( ४१७ ) सन्खिडि ॥ ७ ॥

## ६३०. [4]च्यु ॥ ८ ॥

च्युलिङ्गायामृचि वर्धते । एतामुत्यंमदाच्युताम् ( १७.२ २० ) च्यु ॥ ८ ॥

---

1. ह्रस्वस्य मिति घ
2. तमङ्ग ग
3. यसत्यच्छ ख यस्तात्यच्छा. ग
4 सूत्र घ. न

## ६३१. द्वितीयम् ॥ ९ ॥

२१ २ १

द्वितीयं वर्धते । च्युलिङ्गायामित्यधिकारः । [1]एतामुत्यम्० ( १७.२.२० ) द्वितीयम् ॥ ९ ॥

## ६३२. भस्तुव्या ॥ १० ॥

२२३५　　२१ २ ३५

स्तोभस्तुव्या वर्धते । इहोइह ( १५.२.२ ) वाहोइह ( १५.२.२ )

३२१५

उपाउप ( १४.२.१३ ) भस्तुव्या ॥ १० ॥

॥ इति द्वितीयो दशकः ॥

---

## ६३३. लघ्वनः ॥ १ ॥

२ २ ३ ५　　३ २ ३५

लघ्वनःकारो वर्धते । [2]तुवीशुष्मः ( १२.१.२७ ) शन्तीरुश

३१ २ ३ २१

( १६.१.६ ) शेशातया[3] ( १६.२.१७ ) निवृत्तानि । कदा ( २२८ )

त्रिकद्रु ( ४५७ ) तनत्यत् ( ४६६ ) प्रोअयामीत् ( ५५७ ) अनःकारः ?

३२३५

[4]भर्पइव ( १६.२.१४ ) लघ्वनः ॥ १ ॥

## ६३४. लघोः स्तुपे ॥ २ ॥

लघोः [5]परस्स्तुपेसंघाते वर्धते । [6]स्तुपे ( ५ ) उप । प्रियम् । लघोरिति ? इन्द्रम् । देवः । गंव ( ५१७ ) लघोः स्तुपे ॥ २ ॥

---

1. एतामूत्यम्. ख. ग.
2. तुविशुष्म्यः ग.
3. तयाः ग.
4. मध्य इ. ख.
5. परम्. ख.
6. तुपामित्रप्रियम्. घ.

## ६३५ [1]न वु ॥ ३ ॥

न वुलिङ्गेपर्वणि वर्धते । स्ववान् ( २५४ ) वोअग्नु ( ३४८ ) न वु ॥ ३ ॥

## ६३६. द्वितीयान्नीचे ॥ ४ ॥

२ १ २ ३ १
द्वितीयाद्वर्धते नीचे प्रत्यये । द्वितीयमित्यधिकारः । इदामिदकम्

२१ १ २ १
( ४.१.३० ) पान्होइ-उ-त्ता ( १.२.२७ ) मातेहेत्याः ( ८० ) अहानृभिः

२ ३ २ २ ३ २
( ४११ ) नामानियह्वः ( ५५४ ) वराइणियाः ( १३.१.२ ) तिपौ२सियाम्

( १६.१.३७ ) इन्द्रस्यव ( ५५६ ) [2]तान्स । द्वितीयात् ? समुद्रंव्य (३४३) [3]प्रका । अरिष्टे ( आ.१.१.११ ? ) नीचे द्वितीयमिति ? परीतोपि[4] (५१२) यावतादीनामन्त्येऽपि प्रतिषेध्यम् । द्वितीयान्नीचे ॥ ४ ॥

## ६३७. गिरे घमित् ॥ ५ ॥

प्रथमिपरे [5]प्रत्यये दीर्घस्य द्वैधमित्थमेव वर्धते । माते ( ८० ) अपीप्यन् ( ३०२ ) प्रचेतसे ( ३२८ ) श्रुष्टे ( ५६६ ) निघृत्तानि ।

२१ १२२१ १   २ १२ २२   २२ १२२ १
ग्रावाणोव ( २.१.१४,१५ ) भद्राते ( २.२.१२ ) ईशानस्मा (३.१.१५,१६)

२२ १२२ १
अनापिः ( ३९९ ) सोमाइन्द्रा[6] ( १६.१.२३ ) आसोमः ( ५३३ )

---

1. न पु क सूत्र घ. न.
2. तान्न क न. परं स्थान रिक्तं वर्तते । भाज ख
3. दुकार्ता क न्का ख.
4. परीणीपी ग
5. दीर्घे प्रत्यये क.
6 सोमइन्द्रा ख.

२ १२११
सोमीयउत् ( ५१२ ) [1]आदित्प्रत्नादीनि । दीर्घमिति ? पुरूहूतम् ( ६.२.८ ) अधृष्टम् ( २४३ ) सिन्धुः ( ५१४ ) शिशुम् ( ५६८ ) अस्मभ्यम् ( ४४८ ) उत्तीहुवे ( ३६४ ) प्रथमोच्चत्वात् । गिरे धमित् ॥५॥

## ६३८. ग्नि ॥ ६ ॥

१२१ २२
ग्निलिङ्गायामृचि वर्धते । जनिष्ठादीनि । निवृत्तानि । रामग्ना० ( १.२.११ ) २ १ २ १ नतत्तआ ( २.१.२१ ) २ १ २२ १ तपसाराऽ२३४ ( ३.१.२५ ) २११२ १ पुरौहहोइ ( ३.१.३५ ) ग्नि ॥ ६ ॥

## ६३९. स्ये ॥ ७ ॥

रहस्ये वर्धते । [2]अहरीतायै ( आ.१.१.१३ ) स्वरपञ्चमे ( आ.३.२.१३ ) स्ये ॥ ७ ॥

## ६४०. तादेर्घुनि[3] ॥ ८ ॥

तादेः परस्य द्वैधं लघुनि प्रत्यये वर्धते । यज्ञायथायाम् (आ.३.२.१३) नियतं च निवृत्तं च । तादेर्घुनि ॥ ८ ॥

## ६४१. [4]ष्ठ्यच्चु ॥ ९ ॥

ओष्ठ्यादिन्यामृचि द्वैधं लघुनि प्रत्यये वर्धते । प्रचे ( ३२८ )

1. आदिदात्प्रत्ना. ग.
2. इदं पदं पारद्वयं लिखितं. घ. कोशे.
3. घनि. ग.
4. ष्ट्याचु. ग

[1]आरत्न ( ५११ ) [2]मिन्धुः ( ५१४ ) नृभिः ( ५२३ ) निवृत्तानि। वृत्रहा ( १४० ) पवित्रस्य ( २६१ ) उग्रःशर्मा ( १२.२.१३ ) पवित्रेसो ( १३.१.३३ ) देवेभ्यः पी ( ४७४ ) मरुद्भ्योवा ( ४७४ ) प्रसेना ( ५३३ ) अन्वये। ओण्यादिन्यां लघुनीति ? [3]सुजाद्धाराऽ२ः ( ८.२.४ ) पृथत्तु ॥ ९ ॥

### ६४२. अणः स्यवत्याइन्द्रायाम् ॥ १० ॥

[4]पादादेः परं स्यवति गीते आइन्द्रायां विषये वर्धते। [5]यन्नमस्यन्ति ( ५४ ) एहीम ( १५९ ) अर्कस्ययो ( ४७२ ) विश्वस्यद् ( ४५ ) [6]नीचादित्यधिकारः। पादादेः ? यशस्यते ( २२४ ) अणः स्यवत्या-इन्द्रायाम् ॥ १० ॥

॥ इति तृतीयो दशकः ॥

---

### ६४३. इ ॥ १ ॥

इकारो वर्धते। पादादेः परमित्यधिकारः। तपिष्ठैः ( २४ ) विद्विपः ( २७४ ) नेमिन्तष्टे ( २३८ ) अतिधन्वे ( २४६ ) परिष्टोभा ( १५८ ) परिधीऽ२ ( ५१६ ) इकारः ? कईशाऽ२३नाम् ( ३०७ ) [7]आवीराऽ२३०

1. अरत्न. ग.
2. सिलु ख.
3. सुजद्वाराऽ२ः ग.
4. पदादेः ग.
5. यन्नास्यन्ति. क.
6. तादित्यधिकारः क.
7. आवीराम्. ख.

( ११.१.८ ) पादादेः ? मिजिन्वाऽ२३ताऽ३४३इ ( १.२.१२ ) [1]वसिन्धाऽ-३२वाऽ३४३ः ( ४.१.१७ ) गधिम्राऽ२३या ( १०.२.२५ ) मइन्माऽ२३दाः ( ११.१.१७ ) [2]जनिमाऽ२३नीऽ३४ ( १७.२.२८ ) इ ॥ १ ॥

## ६४४. ऊष्मण्यघोपादिन्याम् ॥ २ ॥

[3]ऊष्मणि प्रत्यये वर्धतेऽघोपादिन्यामृचि । इकारइत्यधिकारः । वतिश्रुतः ( २६३ ) द्विः । तविपम् ( ३८२ ) ऊष्मणि ? जनिमानि (५८३) अघोपादिन्याम् ? महिश्रवः ( ४६७ ) इकार इति ? सपोपिणम् ( ५८ ) ऊष्मण्यघोपादिन्याम् ॥ २ ॥

## ६४५. अः ॥ ३ ॥

[4]अःकारो वर्धते । अघोपादिन्यामित्यधिकारः । घ्नन्ताःकाऽ२३ण्वाम् ( १३.२.२७ ) रायास्पूऽ२३र्द्धी ( ९.२.१ ) पतश्रिये ( ५६८ ) ऊष्मणि ? [5]इन्द्रयाऽ२३स्त्वा ( ९.२.१ ) अघोपादिन्याम् ? [6]उपश्रुधि ( २८४ ) [7]रास्वस्तोऽ२३श्रा ( ८.१.१५ ) अःकार इति ? जुजोपते ( ५७३ ) ऊष्मण्यन्ते ? पहप्णीपु ( ५९५ ) अः ॥ ३ ॥

## ६४६. दाल्लघु ॥ ४ ॥

[8]पदात्परं ऽलघु वर्धते । पुमावोऽ२३वाऽ३४३ः ( १.२.१३ )

---

1. यासिन्धवः घ.
2. जनिमानि. ख.
3. भाष्यम्. घ. न.
4. अकारः ग.
5. इन्द्रायास्त्वा. ख.
6. अत्राःकारो नास्ति। कथमेतत्संगच्छते।
7. रास्तो. ख
8. पादात्. क. ख. घ.

यन्नामाऽ२३स्याऽ३ ( २.१.२३ ) नशाताऽ२३या ( ८.१.१२ ) दुष्टाराऽ-२३न्त्रा ( ८.१.२० ) आचाजाऽ२३गा ( ८.१.२९ ) विष्काभाऽ२३इते ( १०.१.२० ) अमार्ताऽ२३त्वाऽ३ ( १७.२.२९ ) मानाआऽ२३इन्द्रा ( ७.१.२७ ) [1]पदात्परम् ? परमाऽ२३ज्याः ( ७.२.७,८ ) पद्ममाऽ२३नाऽ३ ( १५.१.११ ) लब्धिति ? ये च त्वे ( २५४ ) व्यस्त्यद्रो ( ५४६ ) चित्स ( ८ ) द्रक्षु ( १६७ ) णमु ( १२४ ) प्रभृतीनां पादादेः परमित्य-धिकार. । दाक्षु ॥ ४ ॥

## ६४७. ए ॥ ५ ॥

एकारो वर्धते । [2]पुताइम्नूऽ२३वाः ( ५.१.४ ) महाइवाऽ२३याम् ( ४.१.२१ ) [3]व-धाइनाऽ२३वाः ( ६.१.२७ ) वनेम ( १२८ ) [4]महिते परे । ए ॥ ५ ॥

## ६४८. णीथे वि ॥ ६ ॥

[5]प्रादणीधमंघातस्य ( १ ) [6]द्वैधमेकारो नर्धते । विशाइवाऽ२३इशे ( १.१.२६ ) निवृत्तानि । अनेहाऽ२३साऽ३४३म् ( २.१.३३ ) तिवेधाऽ-२३साऽ३४३ः ( २.१ २ ) इयेथाऽ२३व ( १.२.८ ) [7]ईशेहाऽ२३इवूऽ३

---

1. पादात् क ख घ
2. सुताइनावाः क
3 वाधाइनावाः क
4 तेमहिते ख. ग.
5 प्रादाणीथ० ग.
6 द्वैधमैव घ.
7. ईशेहाइवृ क. ख. ग. न.

( २.१.२९ ) तएमा२२३सा२३४३इ[1] ( १.१.२४ ) णीथे वि ॥ ६ ॥

६४९. [2]वचु ॥ ७ ॥

न वकारादिर्वर्धते । हुवेभा२३राम् ( ६.२.१ ) वविवा२३९साम् ( १३.२.३१ ) वचु ॥ ७ ॥

६५०. गेः ॥ ८ ॥

प्रथमात्पर एकारो वर्धते । विश्वेदग्निः ( ११४ ) भरे भरे (३०९) आइन्द्रावति कृप्टे । सुतेवयाश्सि ( ७७ ) गेः ॥ ८ ॥

६५१. [3]इ सन्त्वः ॥ ९ ॥

[4]इकारवतम्सन्त्वस्य पर्वणो वर्धते । पादादेः परमित्यधिकारः । य–क्षाइया२३मी२३ (२.१.३०) इ–न्द्रास्या२३धा[5] (३.२.८) इन्द्रात्वा२३दा ( ५.२.२१ ) [6]न–काइस्मा२३दा (५.२.९) इकारवतः ? [7]उपप्रक्षा ( २६९ ) उग्रश्शर्म ( ४६७ ) पादादेः ? अग्निः-चिका२३इती२३ः ( १२.१.१० ) इ सन्त्वः ॥ ९ ॥

६५२. अवः ॥ १० ॥

ओकाराच्च परं वर्धते । अग्निवः ( ८७ ) योजरि ( २३५ )

---

1. इतः परं नत्वमाइ इत्यधिकः क.
2. विचु ख.
3. उसन्त्वः क.
4. उकारवतः क.
5. या. ख.
6. नकाइस्मदा. ख. ग. न.
   इतः परं आदशकसमाप्तेः घ. न.

इकारवत इत्यधिकारः । अवः ॥ १० ॥

॥ इति चतुर्थो दशकः ॥

---

## ६५३. श्येने ॥ १ ॥

श्येनसंघाते वर्धते । अग्नेर ( ५ ) श्येनः ( ४७३ ) श्येने ॥ १ ॥

## ६५४. अघोषादेर्व्यम्[1] ॥ २ ॥

अघोपादेरक्षरात्तालव्यं वर्धते । [2]कक्षीवन्तम् ( १३९ ) छन्द्यंवचः ( २५५ ) सृजदश्वम् ( ४८१ ) प्रचर ( ३२८ ) छर्दिर्य ( २६६ ) प्रथमादित्यधिकारः । अघोपादेर्व्यम् ॥ २ ॥

## ६५५. मान्घो[3] द्र नव्यन्[4] ॥ ३ ॥

[5]मान्तपादस्थस्य पर्वणो वर्धते लघोः परं द्रलिङ्गायामृचि, [6]अव्यञ्जनान्तम् (तस्य ?) । द्रवाससम् (१८) सुवीर्यम् (१७५) सुवेनुशकम् (३३३) शतक्रतुः ( ४६६ ) द्विः । पुरुहूतम् ( ३८२ ) सुपर्णम् ( ३८३ ? ) मान्तपादस्थस्येति ? वृणीप्रभृतीनि । लघोः ? त्रातारम् ( ३३३ ) द्रलिङ्गायाम् ? विश्ववेदसम् ( ३ ) अङ्गोपिणम् (५२८) अव्यञ्जनान्तमिति ? ( स्येति ? ) [7]विधुंदप्रभृतीनि । निहवे हवे नीचावीर्यमिति पाठः । विधु

---

1. विंस. ग. वीर घ.
2. काक्षीवन्तम्. घ.
3. गो. ख.
मघोर्द्र ग.
4. व्यम्. ख. ग.
5. पादस्थितस्य क.
पदस्यस्थ. ग.
6. नव्यञ्ज क.
व्यञ्जना. ख. ग.
7. विधुर्य प्र. क.

नीचादित्यधिकारः । मान्यो द्र नव्यन् ॥ ३ ॥

### ६५६. जि ॥ ४ ॥

जिलिङ्गायामृचि वर्धते । सुवीर्यम् ( १७५ ) [1]रथाइताम० ( ९.१.२१ ) निवृत्तानि । वासुद्रुवाऽ२३४५म् ( ६.२.८ ) पूरुस्पृहाम् ( १५.१.१३ ) [2]द्रपार्थिवाम् ( ८.१.३४ ) धस्मानम्० ( ८.२.२९ ) मघवानामिति । जि ॥ ४ ॥

### ६५७. उच्चमन्त्यम् ॥ ५ ॥

पर्वण उच्चमन्त्यमक्षरं वर्धते । अच्छाकोशम् ( ५१४ ) इदमिदकम् ( स्तोमः ) अग्निष्टपति ( स्तोभः ) [3]त्यग्निः ( स्तोभः ) होता । सवाजेषु ( ४११ ) महस्तेणेव ( २३५ ) जागृविः ( ५६७ ) प्रभृतीनि । उच्चमन्त्यमिति ? अत्रैव । [4]नेमिण उभयोर्विशेषो निवृत्तिं ज्ञापयति । मागायताया आदिरित्युक्तम् । उच्चमन्त्यम् ॥ ५ ॥

### ६५८. सुन्या रे वं च ॥ ६ ॥

सुन्या ईर्घं स्वरितात्परं वर्धते पूर्वं च । सुनी ( ४३ ) मदे ( ४७५ ) वृषा ( ४६९ ) निवृत्तानि । प्रभृ । देवान्[5] । आगीरम् । (४०५) सोमोयस्तु ( ५८२ ) षष्टे सुतासोमायाम् । सुन्या रे वं च ॥ ६ ॥

---

1. रथाइताऽ१माऽरम् ख. ग. घ. (९.१.२८)
2. द्र ग. न.
3. त्यग्निं होता क. ख. ग. घ.
4. नेमिणम् ग.
5. देवत्रदा ख.

## ६५९. [1]दीर्घमविङ् ॥ ७ ॥

चतुर्थस्य द्वैधं दीर्घमेव वर्धतेऽवैधस्य पर्वणः । महाऽइन्द्राः ( ५.१.१३ ) सोमाइन्द्रा ( १६.१.१८ ) गव्यासोमा ( १३.२.११ ) वचोदेवा ( ६.१.१६ ) यस्तेमदाः ( १३.१.२ ) दीर्घमिति ? धनुष्ट्वा (१६.१.३७) पवतेहा ( १७.१.३७ ) अवैधस्यति ? शन्नोदेवीः ( १.२.१९ ) वनोहिताः ( १६.२.२ ) दीर्घमविङ् ॥ ७ ॥

## ६६०. डौ ॥ ८ ॥

तृतीये प्रत्यये वर्धते । स्ये—जुहूमसि ( आ.१.२.१९ ) निवृत्तानि । स्रुवदध ( ५७० ) [2]आथर्वणाऽ२ ( ५.१.३४ ) दाइवंययाउ ( ९.२.५ ) डौ ॥ ८ ॥

## ६६१. [3]वचु ॥ ९ ॥

वचु न वर्धते । चिन्त्यम् । वकारादिर्वर्धते । वाजीददा० (५.२.२५) स्वादिष्ठया ( ४६८ ) वादेर्ग्रहणं तु । वचु ॥ ९ ॥

## ६६२. ऊतेययोः ॥ १० ॥

ऊतेययोश्च दीर्घं वर्धते । ऊतएकाम् ( २.१.३७ ) ईयानःकृष्णाः ( ८.२.१९,२० ) [4]आदिः । ऊतेययोरिति ? [5]पुरांभिन्दुः ( ३५९ )

---

1. दिवग विङ् ख.
2. अथर्वणा. ग.
3. दृचु मै. पा.
4. आदीत्सूले रा. आदीघूते. ग
5. पुरांतिदुः ग.

उत्तेययोः ॥ १० ॥

॥ इति पञ्चमो दशकः ॥

---

## ६६३. रोऽप्प्रथमे ॥ १ ॥

स्वरो वर्गप्रथमे प्रत्यये वर्धतेऽल्लिङ्गायामृचि । स्याप्रशस्ताम् ( २.२.१६ ) ताप्रयाही ( ८.२.१,२ ) [1]धुःपवकाः ( १५.१.३६ ) शीतसर्गाः ( ९.१.११ ) स्वरो वर्गप्रथम इति ? अत्रैव । अल्लिङ्गायाम् ? यंमहित्वा ( ८.२.२४,२५ ) तिस्रोगाचके । रोऽप्प्रथमे ॥ १ ॥

## ६६४. इसु कुपु ॥ २ ॥

पदान्तः कुपुलिङ्गायामृचि वर्धते । असुरस्य ( ७८ ) [2]चर्कृपादा ( ५.२.२२ ) भिस्सहस्रैः ( ३२३ ) [3]अपस्नीहितिम् ( ३२३ ) कुपुलिङ्गायाम् ? इदन्तप्रभृतीनि । पदान्त इति ? चर्कृपादीनि । इसु कुपु ॥२॥

## ६६५. तिपु घु ॥ ३ ॥

तकारिष्वक्षरेषु लघु वर्धते । शीतसर्गाः ( ९.१.११ ) निवृत्तानि । सस्कृतानी ( २.२.१६ ) आरत्तामिन्द्राः ( ८.२.१९,२० ) माविवक्ती ( १५.१.३६ ) [4]पृक्तरसाम् ( १५.२.४ ) तिपु घु ॥ ३ ॥

---

1. धूः पावकाः ख.
2. चर्कृपदा. ख.
3. अपास्नीहिति. ख.
4. पृक्तरसम्. क. ग. घ.

## ६६६. सर्वोऽन्तः ॥ ४ ॥

सर्वपर्वणामन्तो वर्धते । क्रुष्टः । तद्विविद्वाइ (१.१.२५) इन्द्रंविश्वाः (९.१.२२) हिताः (२.१.१५) अग्निंदूताम् (१.१.५) एकाक्षराण्यन्तवत् । सर्वोऽन्तः ॥ ४ ॥

## ६६७. जि द्विवतः पते ॥ ५ ॥

द्वितीयस्वरस्य द्वैधं बह्वक्षरस्य [1]पतन्ते स्वरे वर्धते । इन्द्रंविश्वाः (९.१.२२) *येभिः । अन्यत् । अहये । हर्यश्वाय (१५६) स्वरत (स्तोभः)* नेतायः (५८२) [2]अग्निरग्रमुपसाम् (७०) स्वानोअद्रिः (५२९) वराहोअभि (५२४) णस्वन्त इह (५६१) हुवे मरं नकारिणम् (२३७) दिवोदासायरन्धयन् (३९२) परिस्वनाणिसक्षणिः[3] (४२८) रथीतमम् (२८३,३४३) उदुत्यंजातीपञ्चे (आ. ६.२.४) जि द्विवतः पते ॥ ५ ॥

## ६६८. ओव्यूष्मादिः ॥ ६ ॥

ओविप्रत्यये द्वैधमूष्मादिरेव वर्धते । [4]स्यसा (१२.१.३८) अनुशुक्रशोचि (४६५) निवृत्तानि । अत्रैव । ओव्यूष्मादिः ॥ ६ ॥

## ६६९. सिंह्रा चाक् ॥ ७ ॥

[5]अग्निंदूतायां द्वैधमार्चिकं वर्धते । [6]स्ये । यथावर्ई (आ. १.१.१)

---

1. पवन्तं घ.
2. आग्निरग्रमुपसः रा.
3. सक्षणि. रा.
   अक्षरसणि. ग.
4. समा. घः
5. अग्निदूतायाः ग.
6. स्यं. क. रा. ग. न.

पिनासुप्रभृतीनि । निवृत्तानि । आथर्वणे ( आ १.१.२३ ) परे देवस्थाने ( आ १ १ १६ ) बृहतीनामदेन्ये ( आ १ १.२५ ) भर्गयशसोः[1] ( आ. २ २.११,१२ ) महित्रीणायाम् ( आ ३.२ १,२ ) यामेऽग्निमीडायाम् ( आ ४ १ १३ ) तेऽमन्वत ( आ ४.१ १६ ) ग्निद्रा ऋक् ॥ ७ ॥

६७०. [2]प्रिनुः ॥ ८ ॥

[3]ग्वग्रतः पर्वगो वर्धते । अग्ने. प्रिये ( आ २ १ ३२ ) कश्यपस्य ( आ ४ १ १९ ) प्रिनु ॥ ८ ॥

६७१. [4]धना ॥ ९ ॥

धनायाश्चाचिक नधते । द्रमूप्रभृतीनि । निवृत्तानि । असिशब्दो महिशब्दो दिनिशब्द इतिशब्द उनिशब्दः ( आ ६ २ १;३.२ १;२ २.२, ६ २ १ ) धना ॥ ९ ॥

६७२. [5]य ॥ १० ॥

यशब्दश्च धनाया वर्धते । स्नादिष्ठया ( ४६८ ) द्वन्द्वतृतीये पयसि ( आ ३ १ ८ ) य ॥ १० ॥

॥ इति षष्ठो दशकः ॥

---

1 भर्गयशसी क ग ग घ
2 प्रिनु ग
पिनु घ
3 एग्रतिक ख ग घ
4 सूत्र घ न
5 या घ

## ६७३. पिवायाम् ॥ १ ॥

पिवायां च यशब्दो वर्धते । एहीमस्य ( १५९ ) निवृत्तानि । [1]धनसाञ ( २५१ ) पिवायाम् ॥ १ ॥

## ६७४. योनिः ॥ २ ॥

योनिष्टायाश्चार्चिकं [2]वर्धते । योनिष्टादीनि । निवृत्तानि । इदामिद्कम् ( ४.१.३० ) द्वन्द्वपष्ठायोः ( आ. ३.२.१,२ ) अश्विनोर्व्रताये ( आ. ४.१.१५ ) इलान्दे ( आ. ५.१.१ ) योनिः ॥ २ ॥

## ६७५. हरि लु ॥ ३ ॥

[3]हरिरायाश्च लुवत्यां न वर्धते । परीतोपि ( ५१२ ) हरिरासु ( ५३० ) लुवत्याम् ? पावकवर्णाः ( ७.१.२ ) हरि लु ॥ ३ ॥

## ६७६. ममत् ॥ ४ ॥

ममद्वति पर्वणि न वर्धते । नाहममदः ( ८.२.२ ) ममद्भिमिः ( १४.२.१३ ) ममत् ॥ ४ ॥

## ६७७. हो वाहायाम्[4] ॥ ५ ॥

[5]होइत्ययं वाहायां प्रत्यये न वर्धते । सियौऽ३हो ( ५.१.२७ ) स्वऔऽ३हो । हो इति ? तंसु–मगौ ( २.१.३३ ) वाहायाम् ? ऋचौऽ३हो

---

1. धनस्तत्. घ.
2. आर्चिके. ग.
3. हरिभास्ह. ग.
4. वायायाम्. ख. ग.
5. होवत्ययम्. ग.

( २.१.१५ ) प्रभृतीनि । हो वाहायाम् ॥ ५ ॥

## ६७८. मि कयास्थिरायाम् ॥ ६ ॥

मकारि कयास्थिरायां न वर्धते । [1]हतामस्वम् ( ५५३ ) [2]मध्यमम् ( ५७९ ) मकारि ? सूरो न ( ४६३ ) यद्धश्सिवृत्र ( ३९१ ) मि कयास्थिरायाम् ॥ ६ ॥

## ६७९. [3]वेर्लेशु ॥ ७ ॥

मन्द्रस्य द्वैधं [4]लशु इदमेव वर्धते । [5]सोमःकला ( १६.२.१४ ) निवृत्तानि । कर्दम् ( ४३३ ) यवाशिरम् ( १२.१.२७ ) तुव्यादीनि । अग्निदूततृतीयादित्यधिकारः । वेर्लेशु । चिन्त्यम् ॥ ७ ॥

## ६८०. णस्यास्सन्ध्यमत ॥ ८ ॥

णस्या द्वैधं मन्ध्यमेव वर्धतेऽतशब्दवति पादे । [6]ऋञ्जते ( १३५ ) व्यञ्जते ( ५६४ ) [7]अभ्यञ्जते ( ५६४ ) अतशब्दिनीति ? धातवे ( ६४ ) यहन्तवे ( ११९ ) णस्यास्सन्ध्यमत ॥ ८ ॥

## ६८१. यदि ॥ ९ ॥

यच्छब्दवत्यामृचीकारो वर्धते । यत्सोममि (३८४) स्वे यच्छत्रामि

1. हताम् श्वम. ग.
2. र्शमद् यमायम. क.
3. वेलशु. ग.
4. नश. ग.
5. सोमः कलशा. ख.
6. अञ्जते ख. ग.
7. अभियञ्जते ख. ग.

( आ.३.१.२ ) केशिभिः ( आ.३.१.२ ) अतशब्दिनीत्यधिकारः । यच्छब्दवत्याम् ? कस्यनूनंपरीणसि ( ३४ ) यदि ॥ ९ ॥

## ६८२. तमृचि जारिण्योः ॥ १० ॥

तंशब्दादिन्यामृचि जारास्वरिणि पर्वणि ओकारादेः पर्वणो वर्धते । तंवस्सखाद्वितीये ( १७.१.१७ ) निवृत्तानि । तंवस्सखा ( ५६९ ) तमु ( ३८२ ) तंते ( ३८३ ) जारास्वरिणीति ? एतास्वेव । तंशब्दादिन्याम् ? णिहश्मि ( २४८ ) तमृचि जारिण्योः ॥ १० ॥

॥ इति सप्तमो दशकः ॥

---

## ६८३. उदुह्येऽडि ॥ १ ॥

उदुह्येऽडि[1] प्रत्यये न वर्धते । शन्नोदेवीः ( १.२.१९ ) भुवनानाम् ( ३७८ ) नोधनुवन्तु ( १६.२.८ ) इन्महत्सु ( ४११ ) मिरू । उदुह्ये ? अग्निंदूताम् ( १.१.५ ) अडिप्रत्यये ? अयंपूषा ( ५४६ ) इन्द्रोयवाशिरः ( १४५ ) कार्यम्[2] । उदुह्येऽडि ॥ १ ॥

## ६८४. छायाम् ॥ २ ॥

छायां प्रत्यये न वर्धते । शाऽ३चीष-ताऽ२३४५इ[3] ( १०.२.१९ ) नीचम्-वाऽ३इवक्ष-याऽ२३४५इ ( ११.१.१२ ) छायाम् ॥ २ ॥

---

1. अडि क. न.　　　　इति. वर्तवे ।
2. पुनरपि यवाशिरः कार्यम्.　　　　3. अत्रैव भाष्य समाप्तिः घ.

## ६८५. आच्छू ॥ ३ ॥

आकाराच्छूलिङ्गायामृचि न वर्धते । अग्नि न[1] (७२) जगृह्णायाम् ।

नियतं च निवृत्तं च । आच्छू ॥ ३ ॥

## ६८६. दाद्धीप्याम् ॥ ४ ॥

पदात्परं ह्रीप्यां न वर्धते । [2]पिबि ( ९८ ) मम ( १०३ ) तंवः

( ५६९ ) दाद्धीप्याम् ॥ ४ ॥

## ६८७. णे शु ॥ ५ ॥

णेशब्दो न वर्धते शुप्रत्यये । चक्रिणे-शाऽ३४३न्तमानि (८.२.१७)

णे शु ॥ ५ ॥

## ६८८. रं यि ॥ ६ ॥

रंइत्येतत् यिप्रत्यये न वर्धते । द्युमन्ताऽ३स्मेवअजरम् ( ११.२.२ )

[3]यिप्रत्यये ? इतऊतीवोअजाऽ६राम् ( ७.२.३४ ) रं यि ॥ ६ ॥

## ६८९. [4]वश्चित् ॥ ७ ॥

चिदद्रिऽ२३४वः[5]–चिदद्राऽ२३४द्वाः ( १०.१.७ ) वश्चित् ॥७॥

---

1. इतः परं पञ्चमसूत्रीयवर्धते पर्यन्तं. क. न.
2. पि पि. क. ख.
3. यिप्रत्यये. ख. ग. घ. न.
4. वश्चि. ख. ग.
5. चिदद्रिवः ख.

स्वर्वा॑३असुरेभ्यः ( २५४ ) त्वंपुष्यसि ( ७.२.१० ) रहस्ये च ( आ. १.१.२०,२१;२.१.४,५;२.२.१२ ) [1]कस्तमिन्द्र ( २८० ) त्वामिदा ( ८. १.२३ ) प्रत्यस्मै ( ३५२ ) [2]अपूर्व्या ( ३२२ ) तमिन्महत्स्वाजिषु (४११) यंराज्ये ( ११.२.२४ ) [3]वैरूपातिपङ्क्योः ( आ. १.१.१-८;६.२.४ ) अवृद्धार्चिकस्येति ? [4]चचारियमादीनि । जियमो२३४५इ ( ११.१.१७ ) [5]जनोनपु ( ५१२ ) तन्वेचा ( ६५ ) आदेः । नुशब्दस्य तु विशेषः । अवृद्धार्चिकस्य ॥ ७ ॥

## ८५६. न यादेर्जात् ॥ ८ ॥

न चतुर्थादेः माम्नो जात्परस्य पर्वणः संकृष्यते । पाह्यु ( ३६ ) वाजंपुरम् ( २३८ ) ता२३४इ-वियञ्जते० ( १६.२.३५ ) [6]मधुवाभियञ्जते ( १६.२.३५ ) जातपरस्येति ? [7]स्पान्स्यद्रुहः ( ५.२.३३ ) चतुर्थादेः ? अश्सत्रम् ( २७५ ) आमत्योंदध० ( ७.२.२८ ) न यादेर्जात् ॥ ८ ॥

## ८५७. वि वृद्धात् ॥ ९ ॥

विशब्दो वृद्धान्न संकृष्यते । अमावि ( ४७३ ) त्वश्यङ्ग ( ५८३ ) वृद्धादिति ? अत्रैव । अपूर्व्या ( ३२२ ) वि वृद्धात् ॥ ९ ॥

---

1. कस्तंवंद्रत्वा. ड.
2. प्रपूर्वमि० घ.
3. वैरूपातिपङ्क. ग. ड.
4. [illegible]ारियामादीनि. ड.
5. जनोन प्र. ड.
6. मधुवाचातियञ्जते ग.
7. स्यभ्यद्रुहः ड.

## ८५८. आदि ॥ १० ॥

[1]आदिशब्दे च न संक्रम्यते । [2]तमर्तियाः ( ८.१.६ ) [3]स्तोताजरेतमर्तियऽ३ः ( ८.१.५ ) आदि ॥ १० ॥

॥ इति चतुर्थो दशकः ॥

---

## ८५९. त्यमि [4]थि ष्णि ॥ १ ॥

यथर्चं इकारोऽमि प्रत्यये संक्रम्यते [5]निष्णि पर्वाणि थकारिण्यां [6]चर्चि । आदित्यं निष्णुं सूर्यम् ( ९१ ) [7]हरीणाऽ२रथ्यम् ( ३३४ ) स्येचर्पणीधृतम् (आ.२.१.३) निवृत्तानि । महिद्यूतियम्० (२.१.२६) नोदैरियम्वचाः (८.१.२०) [8]मदंमदम्–षष्ठसप्तमयोः ( १५.१.१९,२० ) प्रियमिन्द्रस्यकामियम् ( १६.१.२३ ) घजिह्वियम् ( १६.१.९ ) वन्वन्तिपाँऽ२सियम् ( १६.१.२४ ) तियंबृहत् ( आ.१.०.११ ) यथर्चं ? तुम्यंहाउ ( ६.१.५ ) इकारः ? त्वमग्ने ( १.१४ ) अमिप्रत्यये ? स्पान्त्यद्रुहः ( ५.२.३३ ) त्यमि थि ष्णि ॥ १ ॥

## ८६० तिनः ॥ २ ॥

तकारिणोऽक्षरात्संक्रम्यते । पुनानो चारम् ( ५६२ ) अभ्यर्ष (५७६)

---

1 आदिशब्ददो च ग
2 तमर्तियम् ग
3. स्तोताजरेतमर्तिया क ग. ट
4. धिष्ण्यि मै पा.
5. ष्णिपर्वणि ह
6 चार्चि ग
7. हिरण्या रथ्यम ध.
8 मन्यिम् घ ग ग. प. ह.

त्वंज्योतिषा ( ६०४ ) [1]विश्रतीः ( ६२६ ) निवृत्तानि । पिताधुत्रे ( २५९ )
सत्राचिया० ( ८.१.१० ) वियञ्जते० ( १६.२.३३ ) तिनः ॥ २ ॥

## ८६१. तुडोऽरेफिभ्याम् ॥ ३ ॥

तुडः परस्य पर्वणोऽरेफिभ्यां परं क्रुष्यते । यद्भूमिम्-व्या (३.२.१७) यथा-त्वम् ( ३.२.१९ ) [2]त्वाअद्राऽ२३४इवाः ( ८.१.११ ) दिवस्मदो ( ३१२ ) पिबाति सोम्यम् ( ३८६ ) यथाऽसिनप्त्योः० ( १३.१.३७ ) अरेफिभ्याम् ? [3]चित्रऽराधः ( ४० ) यस्मिन्नवानि ( ४७ ) देवासोअष्टम ( ४२६ ) तुडोऽरेफिभ्याम् ॥ ३ ॥

## ८६२. त्यं वाह्ये ॥ ४ ॥

त्यंशब्दस्यामवाह्ये पर्वणि संक्रुष्यते । सूर्यंचरन्महेऽ२३४५ ( २.१.३५ ) त्यमुवाः ( ५.१.२६ ) त्यमुनोअ ( ९.२.१९ ) मामवाह्य इति ? महिदूतियम्० ( २.१.३६ ) त्यं वाह्ये ॥ ४ ॥

## ८६३. दा न्त्ये ॥ ५ ॥

दकाराद्न्त्ये नाप्यते । द्वितीयया ( ३६ ) द्यौर्न ( १६६ ) दियुते ( ४९७ ) वृद्धात्मा वृद्धे । अनुमायः ( ५५८ ) दीयानः ( ३४० ) [4]दन्त्ये ? दायोहादीनि । [5]मद्यंमदम् ( ५१८ ) दा न्त्ये ॥ ५ ॥

---

1. निविजितीः ग.
2. त्याअद्रिः ग.
3. चि ह. न.
4. दभ्ये ह.
5. मद्यमदम् ग. न.
 · मद्यान्मदम् ह.

## ८६४. तात् ॥ ६ ॥

[1]तशब्दोचात्पर नापद्यते। उतस्यु॒ऽरः (७ २ २५) रहस्ये च (आ.१ १.२–८) उत द्वितीयया (३६) तन्त्वाग्नि (६८) [2]तशब्दोचात् ? [3]तन्वेचा (६५) तात् ॥ ६ ॥

## ८६५ रात् ॥ ७ ॥

[4]रशब्दाच्च पर नापद्यते। अरण्योः (७२) हिरण्ययः (५९७) [5]रथ्ये यथा (४४३) रशब्दादिति ? देवत्रादि (१५४) (उच्चादिति ?) श्रुधीहाऽ२थतिरश्रियाः (९२२) रात् ॥ ७ ॥

## ८६६. तु नडिवान्[6] ॥ ८ ॥

तुशब्दस्सकृप्यते। नडिवानित्युत्तरार्थम्। त्वन्नोया (११ १२) त्वेअग्ने (३८) त्वन्नश्चित्र (४१) त्वमग्ने (१२ ३६) त्वमित्स (४२) त्वमग्ने गृहपतायाच (६१) [7]त्वद्रयि॰ (२२ २५,२६) रायेअग्ने (९३) यथात्वम् (१२२) त्वायुजानौऽ२हो (३२,३१) त्वानतोऽ२ (५ २ १९) उत्वामन्दन्तु॰ (५ २ २०) आत्वाविशन्तु॰ (५ २ २३) त्वामिद्धि (२३४) त्वश्होहि (२४०) त्वमङ्ग (२४७) त्वमिन्द्र

---

1 तच्छन्द क
  तान्छब्द घ ह
2 तशब्दोचात् घ न
3 तन्वेग घ
4 राशब्दात् ख
5 रथ्योयथा ह
6 नडिवान् मै पु न
7 त्वद्रयी। ग

यशाअसि ( २४८ ) त्वद्मऊती ( २६० ) त्वायंवः ( १३२ ) चनस्त्वाद्रिवः ( २९१ ) आत्वद्य ( २९५ ) [1]सित्वाहर्यश्वयज्ञैः ( ३१३ ) इन्द्रस्तु-मसित्वा ( ८.२.५,६ ) त्वन्नाऽ३२उवाऽ३ ( ८.२.१२ ) नित्वा-होऽ३इ ( ९.२.११ ) क्रत्वौहोइ ( ९.२ ३५ ) महान्तंत्वामाहाइनाम्[2] ( १०.१.२२ ) त्वंनइन्द्रा ( ११.१.८ ) अग्ने-होऽ३इ–त्वन्नोअ-तमाः[3] ( १२.१.१५ ) [4]त्वश्साऽ२मूऽ-२३४औ० ( १५.१.२६ ) चत्वार्यन्या० ( १६.२.२४ ) [5]त्वश्ह्याङ्ग (५८३) त्वमेतत् ( ५९५ ) नडिचानिति ? तुवोऽ२३४वा (२.१.४,५,६) इति पाठः। तुवाऽ२३४घा। [6]घृतातूवाऽ३म् ( २.२.२२ ) पिवाऽ३४तुवाऽ३ (५.१.१०) तुवाऽ३४युजा ( ३.२.३० ) आत्वेता ( १६४ ) चसोत्वाः ( २१२ ) तुवाऽ३ऽहोऽ३एहिचेरयाइ ( ६.२.१५ ) सहिया-माऽ३४३-तूऽ३वोऽ५ताऽ-६५६ः ( ८.२.५ ) वेत्विन्द्रः ( ३३३ ) इहसन्त्विन्दवः ( ५६१ ) बृहति ( आ.१.१.२७ ) त्रिपन्था ( आ.२.१.११ ) त्वामिदा ( ८.१.२३ ) अग्रहार्चिकस्य विशेषः। तु नडिवान् ॥ ८ ॥

## ८६७. वादिभ्याम् ॥ ९ ॥

वादिभ्यां च परं न संकृप्यते। [7]वहात्वम् ( ४० ) कायमानः

---

1 इाहित्वा. ग. सत्वा. घ.
2. माहाइनाम्. ख.
3. त्वग्नेऽन्तमाः ग.
4. तंसाऽ३ मूऽ२३४ आ.
5. त्वाण्यग. ङ.
6. घ्रिताहूयाम. ङ.
7. वहा त्वा. ङ.

( ५३ ) यदिन्द्राहम् ( १२२ ) [1]विद्धीत्वास्य ( १३२ ) त्वन्नो जिन्न (२३०) अध्वर्यो द्रावयात्वम्[2] ( ३०८ ) यावतस्त्वम् ( ३१० ) वादिभ्याम् ॥ ९ ॥

## ८६८. ना ॥ १० ॥

नारति पादे न संकृष्यते । अभ्रातृव्यः ( ३९९ ) कायमानः शुक्रिये ( आ ६.१.४ ) [3]ग्रामद्वितीये ( २.१.२०,३१ ) [4]द्वन्द्वस्य यामे ( आ २.२.१४ ) अवृद्धार्चिकस्य विशेषः । ना ॥ १० ॥

॥ इति पञ्चमो दशकः ॥

---

## ८६९. इयुक् ॥ १ ॥

इयुक्तं च न संकृष्यते । औहोऽतुनाम् ( ८.२.२६ ) आत्वापृणाऽ२३हाऽ३ ( ९.२.३ ) नोधनुनन्तु ( १६ २.८ ) इयुक् ॥ १ ॥

## ८७०. [5]इचुन्याम् ॥ २ ॥

इकारादिन्यामृचि न संकृष्यते । भूतुहाउवा ( २.२.१३ ) पिबा त्वस्यगि ( १६५ ) स्ये-इन्द्रचरायाम् ( आ १.२.१,२,१४,१५,२.२.१-८;४.२.१,११,१४,१६,१९,२०;५.१.४;५.२.१३;६.२.२० ) इचुन्याम् ॥२॥

---

1. विद्धीत्वस्य ख
विद्धित्वस्य ग
निन्धुत्वस्य ड
2 द्राम ख यावतन्त्वम् ग
यावतस्त्वा ड
3 ग्राम घ न
4 द्वन्द्वयो यामे न ख. ग. ड.
5 इअन्याम् ड

८७१. [1]व्यचेः ॥ ३ ॥

[2]वकारादेः पर्वणः संक्रूप्यते । त्वंपोता ( ६१ ) त्वायवः ( १३२ ) मणस्त्वोताः ( ३३६ ) त्वंनाऽ२२उवाऽ२ ( ८.२.१२ ) [3]व्यचेरिति ? स्वरोअक्तुषु ( १२८ ) व्यचेः ॥ ३ ॥

८७२. [4]उंसु ॥ ४ ॥

[5]अचति गीते द्वैधं पर्वान्त एव संक्रूप्यते । पूर्वे तु । निवृत्तानि । विद्धीत्वोऽ२३४हाइ ( ४.१.९ ) आत्वाविशन्तु० ( ५.२.२३ ) त्वमेतद् ( ४९५ ) उ नु ॥ ४ ॥

८७३. तद्धे ॥ ५ ॥

तत्=अवृद्धं स्तोभे प्रत्यये संक्रूप्यते । न-क्येनाकी ( ५.२.३० ) य-येयादी[6] ( ९.२.१८ ) [7]अ-स्येयून्नाम् ( १७.२.७ ) [8]प-र्येपारी ( १३.१.३२ ) प-र्येस्वानाः ( १३.१.३५ ) अभ्योना ( १६.२.६ ) भि-ध्योहाइ ( ४.१.१४ ) पर्यों-होइवाजा ( १.२.१५ ) पर्यों-होइस्तावा ( १६.२.२६ ) धर्त्तारंव्या ( ८.१.६ ) रंव्यांवा० ( ८.१.७ ) साइतर-स्यौहो[9] ( १२.१.३५ ) विश्वापा-र्याउहाउ ( १७.१.२२ ) [10]अभ्रातृव्यः ( ३९९ ) [11]स्येऽ-अभ्रातृ ( व्ये )

1. व्ययोः घ.
2. वकारादिनः स.
3. व्ययेरिति. घ.
4. ओहु. ह.
5. अकारयति. ह.
6. द्वेयार्दा घ.
7. अभ्यधून्नाम् ग. अन्त्ये शुन्तमा. घ. अभ्येधुन्नाम्. ङ.
8. पार्ये परी. स. पर्ये परि घ.
9. हा स. न.
10. अभ्रातृव्ये. ह. अत्रातृव्यः ग.
11. स्ये-भ्राज स.

( आ.२.१.१६ ) महादिवाकीर्त्यें-द्यौ०[1] (आ.६.१ १५) पितरं च प्रयन्तस्वः ( ६३० ) निवृत्तानि । त्वमङ्ग ( २४७ ) त्वमिन्द्र ( २४८ ) रजाश्सिसु ( २२० ) स्वादिष्ठ ( ४६८ ) पुनानायाम् ( ५११ ) घ्यमंयुर ( ५७९ ) स्तोभ इति ? ऋक्त्रभिः प्रभृतीनि । तद्धे ॥ ५ ॥

## ८७४. [2]पुचु प्रथमे ॥ ६ ॥

[3]पुशब्दादिन्यामृचि वर्गप्रथमे प्रत्यये संकृप्यते । पुनानायाम् ( ५११ ) निवृत्तानि । समुएऽ३ ( १.१ ३२ ) येपाम्[4] ( १३३ ) हर्यश्वाय गा ( १५६ ) स्तुहि ( १७७ ) मुमुग्धि ( ३१९ ) कादीदिहि-इडाऽ२३भाऽ३४३ ( १.२ २९ ) [5]मार्धोजहि ( ७.२.१९ ) [6]ऋपभान्त्ये ( आ.१.२.२१ ) वैरूपतृतीये ( आ.१.१.३ ) [7]मार्गकामिके ( आ.६ २.६ ) पुचु प्रथमे ॥ ६ ॥

## ८७५. ङि ॥ ७ ॥

ङिनतश्च संकृप्यते । पुनानायाम् ( ५११ ) निवृत्तानि । समुएऽ३ ( १.१.३२ ) अग्नेमृड ( २३ ) आतूऔहो ( ५.२.४ ) अतिस्रिधः (१००) वर्तयामसि ( ३५४ ) एपुगा ( ८ १.३६ ) अतीषङ्गेपु ( आ. १.२.२३ ) ङि ॥ ७ ॥

---

1 द्यौ घ
2 पु अ प्र० ड
3 पुशब्दो वर्गप्र० घ.
4 एपा क. ख ग घ ड
5. मांधा जहि ग.
6 सर्दर्पभान्त्य ख ऋपभान्ते ग
7. सर्वकामिके घ.

## ८७६. योवत्यामु ॥ ८ ॥

यशब्दवत्यामृचि उकारः संकृष्यते । [1]योविश्वा ( ४४ ) ससुन्वे
३र २
(५८२) विभ्राट् (६२८) यशब्दवत्याम् १ प्रति (३०३) एपुवा (८.१.३६)
३ २
पुवा ( १३.१.३३ ) योवत्यामु ॥ ८ ॥

## ८७७. [2]अनु दुह्ये ॥ ९ ॥

[3]पादान्त उदुह्ये प्रत्यये न संकृष्यते । चमसेष्वा ( १६२ ) आयुनि
४ २ ४
( ५५० ) अमावि ( ४७३ ) पादान्तः १ न क्रयादीनि । [4]अच्छ-ए०
( १५.१.२९ ) पदस्याधिकारः । भाष्यम्-यवि यवि (१६०) अनु दुह्ये ॥९॥

## ८७८. हा सा ॥ १० ॥

३ २ १ २१ ४
इहा ऽ३१२३४-इहा-साच्यंसु० ( १३.१.२७ ) स्तोमार्चिकस्य सन्धि-
ग्रहणात् । निवृत्तानि । एकवृषे ( आ.२.१.१४ ) [5]अङ्गिरसाये (आ.४.२.१)
हा सा ॥ १० ॥

॥ इति षष्ठो दशकः ॥

---

## ८७९. भः ॥ १ ॥

२
स्तोभः संकृष्यते स्तोमे[6] प्रत्यये[7] । अनृद्ध इत्यधिकारः । न्यग्नाइः
३२३४२ १ २ १ २
प्रतिदहती ( १२.१.४१ ) समत्रिणंदह ( १२.१.४१ ) न्यत्रिणंदह[8]

---

1. योमत्या ख.
2. अद्दु. ड.
3. पगान्ते. घ.
4 अज ए क.
5. आङ्गिरसाये क. (आ.१.१.१९)
6. स्तोमे प्रत्यये ग. न.
7. स्तोभ इत्यधिकारः क. ख. ग. ड.
8. इतः परं न्यत्रिणं दह इति पाठः ड.

( १२.१.४१ ) संमील्यतृतीये ( आ.२.१.२७ ) व्रतचतुर्थे ( आ.४.१.४ ) दिशांव्रते ( आ.५.२.१,२,३,४ ) आदित्यात्मनि च ( आ.६.२.२१ ) यूऽ२३४भीः ( १०.२.१८ ) ग्याऽ२३४भीः ( १२.२.६;१३.२.१० ) ओइ्ज्वरआ ( १२.२.३० ) ज्योतिः शब्दो रहस्ये । आज्यदोहे ( आ.१.२.१६ ) पुरुषव्रते ( आ.५.१.१८ ) महसि ( आ.३.१.२६ ) आदित्यव्रतसमापने ( आ.६.२.१ ) सहोभ्राजा ( आ ६.२.५ ) [1]छेशब्दोऽष्टानिधने ( आ.४.२.१८ ) कश्यपव्रते ( आ.४ १.१९ ) स्तोभः ? प्रत्युत्यादीनि । स्तोम इति ? [2]एकवृषे ( आ.२.१.१४ ) अवृद्ध इति ? औहोवा-ईऽ२३४हा ( ३.२.१६ ) ऊऽ२३४पा ( ३.१ २ ) रथादीनि । जिग्युः प्रभृतीनि । सुपि द्वारशालायाम् ( आ ६ २.१ ) भः ॥ १ ॥

## ८८०. [3]उज्ञु रसन्धिः ॥ २ ॥

पर्यन्तस्य द्वैधं स्वरसन्धिरेव [4]संक्रम्यते । अष्टानिधने ( आ ४.२.१८ ) राजने ( आ ४.२.१९ ) यद्वर्चः ( ६७४ ) अवृत्तु । आदित्यव्रते ( आ.६.२.१ ) निवृत्तानि । अमिशब्द इतिशब्द उनिशब्दः । उज्ञु रसन्धिः ॥ २ ॥

## ८८१. सि रेफिणि ॥ ३ ॥

[5]सिशब्दो रेफिणि गीते संक्रम्यते । अष्टानिधने [6]( आ.४.२.१८ )

1. चे शब्दः स ग. अचेशब्दः ङ
2. एयवृषे. घ.
3 ऊजु ङ
4. कृष्यते ङ
5 सिशब्दो रेफिणि घ. न.
6 उदाहरणं सर्वथा न विद्यते । प्रमाद पाठो भवेत् ।

द्वारशालायाम् ( आ.६.२.१ ) रेफिणीति १ अत्रैव । मन्येवायाम् ( आ.५.१.२१ ) सि रेफिणि ॥ ३ ॥

८८२. एः पि ॥ ४ ॥

इकारात्पिप्रत्यये संक्रुप्यते । [1]अपां व्रताये ( आ.४.२.३ ) निवृत्तानि । पदस्तोभेषु ( आ.१.२.२५–२७ ) द्वन्द्वद्वितीये ( आ.२.१.२ ) प्रथश्च ( ५९९ ) [2]इडामंक्षारे ( आ.५ २.१६ ) व्रतान्त्ये ( आ.५.२.२२ ) विकर्णमामयोः ( आ.६.१.७,८ ) एः पि ॥ ४ ॥

८८३. [3]ज ॥ ५ ॥

जशब्दश्च पिप्रत्यये संक्रुप्यतेऽनृक्षु । आदित्यव्रते ( आ.६.२.५ ) निवृत्तानि । अत्रैव । पञ्च शुक्रियाद्ययोः ( आ.६.१.१.२ ) अतीषङ्गेषु ( आ.६.२.४ ) ज ॥ ५ ॥

८८४. मसणि ॥ ६ ॥

मशब्दस्संयोगे प्रत्यये संक्रुप्यते । सत्रस्यर्द्धौ ( आ.४.१.४ ) निवृत्तानि । अभ्रातृव्ये ( आ.२.१.१६ ) व्रतचतुर्थे ( आ.४.१.४ ) म सणि ॥ ६ ॥

८८५. [4]न हुचु ॥ ७ ॥

न हकारादि संक्रुप्यते । हइहाऽ३-हाइ ( ११.२.४ ) हइहाहाइ

1. अपरंवृताये. ड.
2. इनसंक्षारे. ग.
3. सूत्रं ग. न.
4. नहु अ. ड.

आग्निर्नस्वद्वृक्तिभिर्हइहाहाइ ( ११.२.४ ) हीऐही॒ऽ२३४या ( १४.१.१८ ) पुनानायाम् ( आ. १.१.१९ ) द्वन्द्वद्वितीये ( आ. २.२.२ ) षष्ठे ( आ.२.२.६ ) दिशांव्रतोपोत्तमे ( आ.५.२ ९ ) महादिवाकीर्त्ये ( आ.६.१.१० ) महानाम्नीषु । न ह्रस्वु ॥ ७ ॥

## ८८६. अन्तस्थि यरे ॥ ८ ॥

अन्तस्थि यकारपरेऽक्षरे प्रत्यये न संकृप्यते । [1]ईयइयाहाइ ( २.२.२३;३.२.२६ ) ईऽ४यइया हाऽ२३४इ ( ९.१.२ ) अर्न्तृतीयोपान्त्ये ( आ.१.२ १४ ) यच्छक्रामि द्वितीये ( आ ३ १.२ ) उदुब्रह्मेति ( आ ४.२.१० ) यत्र मोममाम्नि ( आ ४.१.८ ) यकारपर इति ? न्यनिर्णदह-न्यनिर्णदहाऽ२३४५ ( १२.१.४१ ) अन्तस्थि यरे ॥ ८ ॥

## ८८७. इत्तु भे ॥ ९ ॥

[2]पदान्तो वृद्धे स्तोमे प्रत्यये न संकृप्यते । [3]आयाहिया ( ११.१.३१ ) हिहिहियाऽ६० ( २.१.३६ ) आवश्याधिकघतुरनुगाने ( आ.५.१.१ ) [4]पदान्त इति ? घूऽ२३४मीः ( १०.२.१८ ) दिशः ( स्तोमः ७.१.३१;१३.१.११ ) ग्माऽ२३४मी. ( १२.२.६;१३.२.११ ) वृद्ध इति ?

---

1. इयइयाहाइ ग.
2. पदान्त्ये ग
   पादान्त० घ
3. अयाहि ह
4. पादान्त इति घ.

वाजसाम्नि ( आ.४.१.१२ ) इळु मे ॥ ९ ॥

## ८८८. आन्धायां दी ॥ १० ॥

आन्धायां दीशब्दो न संक्रुप्यते । दीयौः [1]सर्पराज्ञीषु । (आ.६.२.७)

आन्धायां दी ॥ १० ॥

॥ इति सप्तमो दशकः ॥

---

## ८८९. सु ॥ १ ॥

सुशब्दो न संक्रुप्यते । सुववर्तेऽ२३४५ ( ११.२.१३ ) सुववाँ-असुरेभ्यः ( ७.१.१५ ) स्वर्युवाऽ२३ः ( १०.१.१७ ) अच्छावइन्द्रंमतयः-सुवर्युवाऽ६ए ( १०.१.१६ ) सुवराऽ३४ ( १७.१.२,३ ) सुवर्णाराम् ( ३.१.३२ ) तंगूऽ३र्धाऽ३यासुवर्णरोवा ( ३.१.३१ ) कृपासुवाऽ२३४५ः ( १२.१.३७ ) वैरूपेषु ( आ.१.१.५,६,७ ) [2]पुनानः अर्कद्वितीयायाम् ( आ.१.१.१७,१९ ) तवेदिन्द्र ( आ.१.१.२० ) शन्नोदेवीः (आ.१,१.२३) यनश्स्वः ( ५८८ ) पतिसाम्नि ( आ.१.२.१२ ) अर्कपञ्चम्याम् ( आ.२.१.१ आदिषु ) रथन्तरे ( आ.२.१.२१ ) सम्मील्यपञ्चमे ( आ.२.१.२९ ) अरुरुचत् ( आ.३.१.९ ) व्रतवृतीयायां तृतीये ( आ.४.२.३ ) चतुर्थ्यां तृतीयचतुर्थपञ्चमेषु ( आ.४.२.१३-१५ ) पात्यग्निः ( आ.५.१.३ )

---

1. सीर्परा, घ.

2. पुनाप्रभृति व्रतोत्तम इडापर्यन्तं ग, न.

पुरुषव्रते ( आ.५.१.१८ ) [1]व्रतोत्तम इडासंक्षारे (आ.५.२.१६) आवश्याधिकानां पश्चानुगाने ( आ.५.२.११,१३ ) योनः ( आ.५.२.१४ ) अष्टानिधने ( आ.४.२.१८ ) राजने ( आ.४.२ १९ ) मासे ( आ.६.१.८ ) चन्द्रमाअप्सुवा ( ११.१.३४ ) चन्द्रौहोमाअप्सुवन्तरा ओऽ६वा ( ११.१.३५ ) चक्रंयदस्याप्सुवानिषत्ताम् ( ८.२.२४ ) दधन्वॉयोनर्योअप्सुवन्ताऽ२३रा ( १४.२.७,८ ) कश्यपस्येति ( आ.४.१.१९ ) रहस्ये । [2]वकारादिग्राह्यः । पराङ्गत्वात् । निवृत्त्यर्थं च । सु ॥ १ ॥

## ८९०. कण्ठ्ये क्षे[3]ऽसणि शतावति ॥ २ ॥

कण्ठ्येऽक्षरेऽसणि शतावत्यादेशो न संकृष्यते । [4]स्वाऽ्यः ( ५४८ ) स्ये स्वानो अद्रिः ( आ.५.१.१२ ) भाष्यम्—[5]पूर्णो ( ४२७ ) निवृत्तानि । स्नसरेम ( ४५८ ) स्नापे ( २८२ ) स्नान्धसा ( ४७० ) पर्येस्वानाः ( १३.१.३५ ) स्वानोअद्रिः ( ५२९ ) हाउस्वरता ( १२.१.१ ) हाउ-अभिस्वरता ( १२.१.२ ) स्वरतस्वराऽ२३ता ( १२.१.३ ) कण्ठ्य इति ? योगादिषु । अक्षर इति ? स्वर्णिधनभासे ( आ.६.१.८ ) असणि ? [6]स्वस्तये ( २०२ ) स्वर्युवादीनि । कण्ठ्ये क्षेऽसणि शतावति ॥ २ ॥

---

1. नोपोत्तम इडा घ. नोत्तमइडासं. क. ख. ग
2. त्वकारादिः क. ख ग
3. क्षरे घ.
4. स्वर्यः ग. स्वानः ङ.
5. पूर्णः क ख. ग.
6. अत्र संकर्षो नास्ति. कथमुदाहृतम्

## ८९१. न तिनः ॥ ३ ॥

न तिनो॒ऽक्षरात्संक्रुप्यते । ता स्वरत० ( १२.१.३ ) पुरुपगतौ ( आ. २.१.३४ ) जमदग्निव्रते ( आ.४.२.१५ ) देवव्रतेषु च ( आ.५.१.६–८ ) न तिनः ॥ ३ ॥

## ८९२. ग्निद्वान्नेदन्तायाम् ॥ ४ ॥

अग्निदूताक्षरान्नेदन्तायां संक्रुप्यते । स्वरतादिषु ( १२.१.३ ) देवस्थाने ( आ.१.१.१५ ) अरूरुचत् ( आ.३.१.९ ) अग्निमीडायां च ( आ.४.१.१३ ) प्रयन्त्स्वः ( ६३० ) ग्निद्वादिति ? आङ्गिरसपूर्वे ( आ. १.१.१९ ) नेदन्तायाम् ? तवेदिन्द्र-सर्पसाम्नि ( आ.२.१.४,५ ) विश्वतः पूर्वे[1] ( आ.३.१.१३ ) ग्निद्वान्नेदन्तायाम् ॥ ४ ॥

## ८९३. आइन्द्रावति गिनि[2] ॥ ५ ॥

आइन्द्रावति साम्नि गकारिणि गीते संक्रुप्यते । [3]तं गूर्धान्त्ये ( ३.१.३३ ) पुरुपगतौ च[4] ( आ.२.१.३४ ) आइन्द्रावति ? तं गूर्धयियोः ( ३.१.३१,३२ ) गकारिणीति ? सुवा॒ऽ२३हा ( ७.१.१३ ) आइन्द्रावति गिनि ॥ ५ ॥

## ८९४. गिगहि ॥ ६ ॥

प्रथमोच्चेऽहिलिङ्गायां संक्रुप्यते । स्वध्वरम् ( २.१.११ )

---

1. ऋचोच्छब्दो नास्ति । कथमुदाहृतमिति विवेचनीयम् ।
2. गिनि. ग. न.
3. तं गूर्धयन्ते ड.
4. वा. क. ख. ग. आइन्द्रास्वरो नास्ति ।

[1]स्वस्तये (३२२) सम्मील्यपञ्चमे ( आ.२.१.२९) अरूरुचत् (आ.३.१.९) व्रततृतीयायाम् ( आ.४.२.२ ) व्रतपञ्चम्याम् ( आ.५.१.१० ) प्रथमोच्च इति ? रथन्तरे ( आ.२.१.२१ ) अहिलिङ्गायाम् ? स्ववान् ( २५४ ) कृपास्वः ( स्तोभः ) गिगहि ॥ ६ ॥

## ८९५. ओअ ॥ ७ ॥

ओअइत्ययं[2] न सन्धीयते । आइन्द्रोअ-ग्नाऽ२-याऽ२३४० ( ३.२.२९ ) गावोऽ२अश्वाऽ२३४५ः ( ४.२.१५ ) अन्तरिक्षणिधने ( आ १.१.९,१० ) रहस्ये विशेषः । ओअ ॥ ७ ॥

## ८९६. स्येऽन्तस्थायाम्[3] ॥ ८ ॥

रहस्येऽन्तस्थायां न सन्धीयते । अहर्व्रताद्ये ( आ.४.२.५ ) देवव्रतेषु ( आ.५.१.६-८ ) सहोलिङ्गे ( आ.६.२.५ ) अन्तस्थायामिति ? अत्रैव । [4]अन्तरिक्षे ( आ.१.१.९,१० ) स्येऽन्तस्थायाम् ॥ ८ ॥

## ८९७. अं परवृद्धः ॥ ९ ॥

सस्वर इति । अत्रान्तः परवृद्धः सन्धिस्सन्धीयते । घृपोअर्वा (२६३) पवित्रेसोमः तृतीये ( १३.१.३३ ) मघोऽ२३र्वा ( १३.२.१८ ) होऽ२-

1. स्वस्तयेप्रभृत्यहिलिङ्गाया पर्यन्तं ख. न.
2. इत्यसन्धि न. स. घ.
3. अन्तायाम् ख.
4. क. ख. ग. कोशेपूपरितन-सूत्रीयभाष्यगतगोन्धसाः प्रभृत्यासमाप्तेर्भाष्यमत्र लिखितम्. तत्र च नास्ति ।

भिया० ( १५.१.३४ ) वोऽ४न्धासाः ( १६.१.१२ ) दधन्वाँ यो नर्यः ( ५१२ ) होऽ२३४र्तियाः[1] (१.१.३३;२.२.२१) [2]अमिति ? वोआओँऽ३ होऽ३-धासाः ( १६.१.९ ) परवृद्धः ? यज्ञायोपान्त्ययोः ( १.२.२२,२४ ) इतऊती ( २८३ ) परिसप्तमाष्टमयोः ( १४.२.७,८ ) पुनानोआ ( १३. २.२३ ) अपर्यान्त इत्यधिकारः । अं परवृद्धः ॥ ९ ॥

## ८३८. चिनि ॥ १० ॥

मन्द्रिणि गीते संकृष्यते परवृद्धः । ओअइत्यधिकारः । प्रदैवोदासोग्नीः ( २१.१.१८ ) सुभगमाऽ३-द्रोऽ२ध्याऽ२३४राः[3] (३.१.३६) नत्वावृह-तोऽ५ द्रयाः ( ८.१.१७ ) महयाऽ२न्तोऽ२३४-कैः ( १२ १.१,२ ) होऽ२-भिया० ( १५ १.३४ ) पुरोजितीवोऽ४न्धामाः ( १६.१.१२ ) तोऽ२क्षाऽ२३४रान् ( १६.१.१९ ) [4]तोऽ२ध्याऽ२३४राइ ( ४.२.१२ ) मन्द्रिणीति ? द्वरो-अक्तुप्रभृतीनि । [5]ओअ इति ? सओऽ२३४त्रा ( ३.१.२७ ) परवृद्धः[6] ? अग्नेरक्षा ( २४ ) इतऊति ( २८३ ) पुरोजिती ( ५४५ ) अध्वर्योऽ२३४आ ( १४.१.५ ) अपर्यान्त इत्यधिकारः ॥ चिनि ॥ १० ॥

॥ इत्यष्टमो दशकः ॥

---

1 अत्राओ नास्ति। प्रमादपाठो भवेत्।
2 अमितिम् ख
3 ध्याइराः ग न
4 तोकराइ ड.
5. न्योआइ आओऽ२३४। वा ग.
6. पर वृद्धे क ख.

## ८९९. ग्नि ॥ १ ॥

ग्नि च प्रत्यये संक्रूप्यते । नमस्तौ-होग्नाइ ( १.१.२० ) इन्द्रोऽ-२३४ग्नाइ ( ३.२.२९ ) इन्द्राऔऽ३होऽ२३४-ग्नाइ ( ३.२.२९ ) आइन्द्रो अ-ग्नाऽ२-याऽ२३४० ( ३.२.२९ ) मन्द्रिणीत्यधिकारः ॥ १ ॥

## ९००. यि ॥ २ ॥

यि च प्रत्यये संक्रूप्यते । त्वन्नोया ( १.१.१२ ) [1]यदिन्द्रोया ( ४.२.६ ) [2]ग्रोपूर्वयोः ( १६.२.१४,१५ ) द्राघीयाऽ२३४यूः (१०.२.२८) ग्रोअयासीदन्त्येषु ( १६.२.१६–१८ ) मन्द्रिणीत्यधिकारः । यि ॥ २ ॥

## ९०१. र्यो चे ॥ ३ ॥

र्याशब्दो नीचे प्रत्यये संक्रूप्यते । दधन्नाऽयोनर्योऽ२० (१४.२.१) नीच इति ? नर्योऽ२-आ प्लुऽ३आन्ताऽ३रा ( १४.२.२ ) र्यो चे ॥ ३ ॥

## ९०२. ह्रस्वेऽयवौ होतायाम् ॥ ४ ॥

ह्रस्वे प्रत्यये एकारौकारयोः द्वैधं[3] होतायामेव सन्धीयते । अयमिन्दवेऽश्वपते ( ४०२ ) सोमयु ( ५०३ ) निवृत्तानि । सूमिर्नसो ( १.२.२८ ) वचोउपाऽ२३४५ ( ७.२.३ ) यित्नवेअपश्वालम् ( ५४५ ) उपमाम् ( ३९१ ) उक्षामिमे ( आ.३.१.९ ) ह्रस्व इति ? अस्मभ्यमूतये

---

1. यदिन्द्रोया घ. न.
2. ग्रोपूर्वण्योः ग.
3. द्वैधाहो. ड.

( १० ) चकामे ( ३१८ ) [1]पवसे ( ६२७ ) [2]अयवाविति ? अत्रैव ।

ह्रस्वेऽयवौ होतायाम् ॥ ४ ॥

## ९०३. अड्यसरयोः ॥ ५ ॥

अडि प्रत्यये द्वैधमसपरयोरेव सन्धीयते । यजतंत आदीनि । [3]असपरयोरिति ? त्वेअग्ने ( ३८ ) सिन्धुर्नपिप्ये ( ५१४ ) घर्मतन्वोः ( आ.२.२.१५,१६ ) अड्यसरयोः ॥ ५ ॥

## ९०४. भोऽदम् ॥ ६ ॥

[4]भथानेपदं सन्धीयते । [5]हुवए ( १.१.३२ ) हुवओइ ( १.१.३१ ) विकर्णभासयोः (आ.६.१.७,८) अनेपदमिति ? [6]एअयापवा ( १३.२.३० ) कनिक्रददेउपाऽ२३४५ ( १७.१.२६ ) दिशां व्रते च ( आ.५.२.२ ) [7]एकारोत्पत्याम् । वैराजे ( आ.२.१.३१ ) भाष्यम् । अभ्रातृव्यः ( आ. २.१.१६ ) भोऽदम् ॥ ६ ॥

॥ इति संकर्षविकर्षविधिः ॥

॥ इति नवमो दशकः ॥

॥ इति सामतन्त्रभाष्ये नवमः प्रपाठकः ॥

---

1. पवस्वे क. ख.
   प्रयसे घ.
2. अयदाविति घ.
3. अपरमयात्रीति घ.
4. भथ्रनेपदं क. ग. घ.
5. यहुवीव. क. ख. ग. घ.
6. एअपापावा. ग.
7. एकात्यत्याम् ख.

## ॥ अथ दशमः प्रपाठकः ॥

### ९०५. वृदाम् ॥ १ ॥

वृद्धो वर्णो [1]आइ आपयते । तद्विविदुहाइ ( १.१.२५ ) पचता-पक्ताइ०[2] (८.१ २) वाधोजहाइ ( ४.१.१४ ) आवत्तम्-आइ[3] ( ८.२.२१ ) आथर्वा-नाइः ( १.१.१८ ) नाआगहि-आइ०[4] ( ७.२.३५ ) [5]पाइप्रिया ( ३.२.२४ ) वमरताऽ२३इम् ( ३.१.३३ ) [6]ऋआइपीशाऽ२ ( ६.२.३२ ) नन्दाइ-वाऽ३० ( २.१.४० ) यवाशाइराः ( ४.२.२ ) इन्द्रनेदीयएदि-हाइ-मितमे-धा[7] ( ७.२.३१,३२ ) साहाऽ३ साऽ२३४५इः ( ८.२.१८ ) मिस्महत्साऽ२३इः ( ८.२.१९ ) शुद्धाइरूऽ३क्थाऽ३इः ( ९.२.८ ) जन-यन्त्सूर्यमऽ३पाइन्वोअर्काऽ२३४५इः ( १५.२.१९ ) इदंवसाउ ( ३.२.२१ ) आतावसाउ ( ७.१.१६ ) पुरूऽ२वामाऽ२उ ( ४.२.३ ) कस्तमिन्द्रा-त्वाऽ२वामाऽ२उ ( ७.२.२८ ) [8]वमाऽ२उ ( ७.२.२९ ) वृहदर्चविभावाऽ-२३माउ ( २.२.२५ ) विभावमाउ ( २.२.२६ ) यस्तेनूनाऽ५ऽशतक्रताउ ( ३.२.५ ) [9]शत-क्राऽ२ताउ ( ९.१.१४ ) [10]शतक्राऽ२३ताउ ( ९.१.१६ )

1. आं घ.
2. परतापक्ताइ. ग.
3. आवाइ. ग.
4. आइ. ग. न.
5. प्राइसूरिया. ग.
6. नृजाइपीणा. क. ख. ग. घ.
7. इतः परं गाशभिः सहस्राऽ२३८ इः, इत्यधिकः घ.
8. वमाउ. ग.
9. शताऽ२ क्रताउ ( ६.२.३० ) क. ख.
10. शतक्राऽ२३४ताउ ( ९.१ १४ ) क. ख. ग.

[1]सार्प्रौऽ२० ( ६.१.९ ) नाम्णोऽ२म् ( ७.१.३२ ) साऽ१धाऽ२ः काण्वोऽ२३ ( ६.१.९ ) स्याऽ२३माऽ३-स्ताऽ२३४५र्तोऽ६हाइ ( ६.१.२२ ) दियेवाऽ२-द्धै-हा० ( ६.२.१३ ) [2]ऋऽ२३तावाऽ१द्धोऽ२ः ( ७.१.२२ ) [3]आर्तावसाउ ( ७.१.१६ ) अरंकाऽ२३र्ताऽ३४३म् ( ८.१.१६ ) युंस्त्राहिवाऽ३त्रोऽ३हन्तम[4] ( ८.१.२२ ) वाद्धोइ[5] ( ११.१.१९ ) चाइ० ( २.१.१० ) घ्न-तंवाऽ२३-न्नोऽ३ ( ८.२.३२ ) [6]आर्ताओऽ२३४वा ( ९.१.२७ ) सुवाऽ२र्क्तोऽ२३४-इमीः ( १०.१.१५ ) [7]अमार्ताऽ२३त्वाऽ३ ( १७.२.२९ ) अमार्ताऽ३त्वाऽ३ ( १७.२.३० ) अमाऽ२३-ताऽ२त्वाऽ२३४० ( १७.२.२८ ) दाऽ२३४-शैंहाइ ( १.२.१६ ) गार्हपताऽ३इ ( १.२.३२ ) प्रत्यसैंपिपाहाउ[8] ( ९.२.११ ) आनीकयाऽ३१उवायेऽ३ ( २.२.३० ) श्रूद्याउवा ( १७.१.४ ) ररोमभाउ[9] ( ६.२.२९ ) प्रभृतयः । वृदाम् ॥ १ ॥

## ९०६. स्वायाष्टे ॥ २ ॥

आस्वायाः कुष्टे प्रत्यय आ भवति । प्रातरग्निः ( ८५ ) असृग्रम्

1. सार्प्राकारा. च.
2. येनज्योतिरजनयन्नाऽ३ तावाद्धा. च.
3. आर्तावसाइ. च.
4. वात्राऽ२३४ हन्तम. ग,
5. वाद्धेऽ२ः (७.१.२२) क.ख.ग. घ.
6. पूर्ताओभ्ययव्यभ्य वा. घ.
7. आमार्त्ता त्वा ग.
8. विपाहाइ. घ.
9. ररोसदाइ. ग,

( २०५ ) प्रसोमदे ( ५१४ ) पयसि ( आ ३.१.८ ) ऐरिणे ( आ. १.१.१८ ) कृष्ट इति । अग्निर्मूर्धा ( २७ ) पयसि ( आ. ३.१.८ ) त्वायाहि ॥ २ ॥

## ९०७. सस्वरयोरुदु ॥ ३ ॥

सस्वरयोः प्रत्यययोः पर्यान्त आ भवति । कदाचन ( ३०० ) विशोविशः ( ८७ ) सस्वरयोरुदु ॥ ३ ॥

## ९०८. दु सन्ध्यम् ॥ ४ ॥

उदुग्रस्य द्वैधं सन्ध्यमेवा भवति । उक्थाइ ( २.९.२ ) इन्द्रउक्थाइ ( ६.१.१८ ) युजंवृत्राइ ( ४१४ ) प्रमामदा ( १४.७.२० ) परस्वदा ( १७ १.२५ ) त्वश्वाक्ष्नदा ( १७.२.२९ ) स्ये रेवतीः ( आ. २.१.१८ ) तुरयन्तः ( ३३७ ) अभिप्रिद्वितीये ( १६.२ २ ) त्वमग्ने ( ९६ ) रायेअग्ने ( ९३ ) प्रभृतीनि । इदंनमाउ ( ३.२.७१ ) इन्द्रायेन्दाउ ( १३.१.१३ ) निवृत्तानि । शन्नोदेवी; शंयोरभी ( १.२.१८,१९ ) ऐहीयैही (४.१.२८) ईङ्खयन्तीः ( ५.१.३२ ) तरणिरित् ( ६.२.८ ) परिभ्रामी ( १३.२.१९ ) कथानश्वी ( ५.१.२३ ) हाउतमूनभी ( १०.१.२७ ) तन्तेऽ५मदम्-गृणोऽ५मसि ( १०.१.३१ ) [1]तमिन्द्राऽ२३म्वाजयाममी ( ३.२.१० ) शन्नोदेवोः ( १.२.१८,१९ ) उदुघेति । अरंनहन्ति ( २५ ) मन्येवायाम् ( आ.

1. तमिन्द्रंवा घ च

५.१.२१ ) आदित्यात्मनि ( आ. ६.२.१ ) आनन्दप्रतिनन्दयोः ( आ. ६.२.२,३ ) सार्पराज्ञेपु[1] ( आ. ६.२.७–९ ) ओइ-माऽ२३हीऽ३ ( १६.१. ३६ ) दीतये३र्दिः ( ४९ ) नाऽ२३४इ-पूतोअधिव्रर्हिपो ( ४.२.३२ ) [2]अग्वीअग्वी ( ७.२.२३ ) ओग्नीः-वृत्राणि० (१.१.८) पावी ( १३.२.६ ) [3]उहुवाऽ२३४मीः ( १.१.३० ) ओहा-ओग्नोः ( १.२.५ ) अग्नाइमूहाऽ२-महा३आऽ२३४सी[4] ( १.२.७ ) कस्यानूऽ१नाऽ२म्-पारीणाऽ२३४सी ( १. २.२० ) पाहोऽ२इगाऽ२३४इर्मीः ( १.२.२७ ) [5]रामायाऽ२३४सी । याशाआऽ२३४सीऽ६ ( ६.२.३३ ) क्रामीदाऽ२३४मी ( १३.२.२३ ) वीचर्पाऽ२३४णीः शुम्भाऽ२न्ताऽ२३४इवो ( १३.२.२३ ) नव्याऽ२ज्ञाऽ-२३४इर्मीः ( ४.१.३१,–३३ ) [6]भू-रियाऽ२सुऽ२३४तीः ( ४.१.२३ ) अरिष्टनाऽ२३४इमीम् ( ९.१.१ ) उद्व३शाऽ२३४मो ( ९.१.१६ ) महा-न्ताऽ२३४मी ( ८.२ ३ ) अमोऽ-होऽ३इ द्विः । त्नाऽ२३४मी (११.१.१३) यया३सियन्तावमूऽ२३नी ( २.२.१५ ) वचांसि ( ३३० ) आनन्दप्रति-नन्दयोः (आ. ६.२.२,३) उतएकादीनि । आयाहिवी ( १ ) एऽ५–शुचीम्[7]

---

1. सार्पराज्ञीपु क. ख. ग. घ.
2. अग्नीआत्वी. ग. अणी अणी अनन्तर आभीआर्भी (५.१.१०) अधिकः पाठः च.
3. इद्दुग्रामे अधिकः. ग
4. महऽ३असि च.
5. कारासा च.
6. भूरियामृभिः क. ग. उदाहरणमेतत् ख. न. भूरियावसुरिति घ.
7. शुचीः च.

४ २४ २२ ४ ४ २
( १.१.३२ ) त्वन्नइन्द्रा ( ४०५ ) यंपृक्षुसासहीम् ( १०.१.३३ ) [1]बृहन्नधी
४२१ २ १ ४
( १६.२.२ ) स्वरोनहीं० ( २.२.२२ ) ब्रह्माकृस्तङ्सपर्यंती ( ४.१.२८ )
४ ५ ४ ५ ३ २
जीवाज्योतीः (७.१.२५) श्रुधीऽ३ (२.१.१७) द्विः। विधुम् (३२५) गृणीमसि
४ ३ ४ ३ ४ २१ ३ २
( ३८३ ) तरणिरित्सिपा-सतीऽ३ ( ६.२.११ ) यच्छक्रासि[2] ( २६४ )
३२ २ ४ ४१ २१ ४
पुरोऽ३१-जीऽ३तो ( १६.१.११ ) द्विः। आयाही ( ६.१.१९;११.१.२ )
४ ५२१ ४
अचेती ( १२.१.१० ) इन्द्रोराजायाम् ( ५८७ ) इन्द्रसप्तमाष्टमयोः ( आ. २.२.७,८ ) व्रततृतीयाद्ये ( आ. ४.२.१ ) महानाम्नीषु। आवुन्दंवृ ( ६ १.८ )
४ ५ २ १ ४ १ ३ ५ २ ३ ५
शवसेवृ ( ११.१.२२ ) ईयानाऽ२३४ःकृ ( ८.२.१८ ) हन्तायोऽ२३४वृ
४ ५ ४ ५
( ९.१.६ ) यादिन्द्रामु ( ५.१.३० ) पर्यान्त इति! नमुचेः ( २११ )
४ ५ ३ २ ४ ५
जरितः ( ३९ ) अग्नेहाउ ( २.२.२० ) शिपाऽ३महेहाउ ( १०.२.१५ )

देवानाम् ( १३८ ) [3]मेडिम् ( ३२७ ) चतुः एषा ( ४३८,५८४ ) एतम्
१ २ १
( ५८१ ) स्ये-देवी जनि० ( आ ३.१.१९ ) रेवतीर्नआये ( आ.२.१.१७ )

इन्द्रसुतेषुसो ( ३८१ ) तन्तेमदम् ( ३८३ ) यस्तेमदः ( ४७० ) पिब

ज्येष्ठम्[4] ( ३४४ ) विश्वाद्वेषाङ्सि ( ४६३ ) अग्नेसाते ( ७६ ) त्वाहर्य-
२ ३ ४ ५
श्वयद्भैः ( ३१३ ) भाइमहस्सैः ( ८ २.२० ) महयन्तोअर्कैः ( ४३९ )

---

1 ए बृहन्न र्ी च

२ २ ४
2- इतः पर यक्रृताऽ३इचीं० (६ २ २२) अधिकः पाठः च.

3. मेमसिम् घ.

4 पिवाज्येष्ठम् घ

दु सन्ध्यम् ॥ ४ ॥

## ९०९. आदित् ॥ ५ ॥

आदित्प्रत्नायाश्च भवति । [1]वनेषु ( ४६ ) प्रयोराये ( ५८ ) अहमिद्धि ( १५२ ) [2]ऊतिभिः ( २८२ ) एन्द्रनोगधि ( ३९३ ) परिप्रिया ( ४७६ ) यत्सोममि ( ३८४ ) आदित् ॥ ५ ॥

## ९१०. सत्येऽसार्वावति ॥ ६ ॥

सत्यसंघातेऽमार्गावति साम्न्या भवति । याऽ५इतयाइ ( १.१.३ ) भेषजम् ( १८४ ) वृषेदमि ( २६३ ) अभिश्रिया ( ३७८ ) स्वादिष्टया ( ४६८ ) आमन्द्रैरुपान्त्ये ( ६.२.२८ ) अमार्गावतीति ? [3]त्वमग्नेगृहप ( ६१ ) आमन्द्रैरिन्द्रान्त्ये ( ६.२.२९ ) सत्येऽसार्गावति ॥ ६ ॥

## ९११. वृद्धादुग्नु ॥ ७ ॥

वृद्धात्परस्य (:?) द्वैधं पर्वान्त आ भवति । ओग्नाइ (१.१.१) नमस्तौ-होग्नाइ ( १.१.२० ) यास्ताइ ( १३.१ १ ) प्राहूयाऽ२३४साइ ( १.१.२७ ) मनुर्दाऽ२३४धाइ ( २.१.२२ ) अग्नाइसाऽ२३४ख्याइ ( २.१.३८ ) दूराइ[4] ( २.२.८,९ ) आग्नेमाताइ[5] ( २.२.१३ ) नपत्यसे ( ८४ ) अरिरग्ने ( ९७ ) सधमादे ( १५३ ) युनजते ( ३१८ ) णिपवते ( ५५४ ) अरिष्टे

1 वनेषु या क
चनेषु ग. वनेषु मा. घ.
2 रीतिभि [illegible]
3 त्वामग्नेगृहया घ.
4 दूराऽ२३४ याम् च
5 सानोइ ग

( आ. १.१.११,१२ ) धर्मतन्वोः ( आ. २.२.१५,१६ ) निवृत्तानि । गृणन्तिदे ( ११ ) देवाऽरसोऽ२३४दे ( ३.१.३३ ) वज्रेण ( २५७ ) प्रस्रवणे ( २६१ ) असावि देवम् ( ३१३ ) पवस्वदे ( ४८३ ) रामातीऽ२३४ये ( १६.२.२८ ) [1]ह्वोअधीऽ२३४ये ( १६.२.१ ) प्रदेवम् ( ५६३ ) दीदीहाऽ२३४इदे-व० ( १७.२.७ ) तरोमिः ( २३७ ) वृद्धादुन्नु ॥ ७ ॥

## ९१२. नवेऽह्रस्वान्ते ॥ ८ ॥

नवेशब्दोऽह्रस्वान्ते प्रत्यये आ भवति । बृहद्वयाः ( २.२.२८ ) शंयद्गवे ( ११५ ) यमन्याऽ२३४वे-यमन्याऽ२३४गाइ ( १०.१.७ ) त्व-न्तङ्सख्याय ( ३८० ) [2]आयाह्ययम् ( ४०२ ) कडमम्-उहुवाहाइ ( ५.२.१५ ) प्रहोताजातः[3]-उहुवाहाइ ( २.२.१५) अह्रस्वान्ते । दिवेदिवे (५१६) यधृष्णवे ( ५५१ ) पर्यन्ति इत्यधिकारः । नवेऽह्रस्वान्ते ॥ ८ ॥

## ९१३. [4]उद्वि ॥ ९ ॥

[5]उद्विलिङ्गायामा भवति । शवक्रतउद्वंशमि ( ३४२ ) दद्वसाउ ( ९.१.३१ ) निवृत्तानि । हसोयहो ( ९९ ) सख्यइन्दो ( ५१६ ) इन्द्रा-येन्दो ( ४७२ ) उद्वि[6] ॥ ९ ॥

---

1. स्योअधीये च.
2. आयाह्ययं क. ख. घ. न.
3. जाताः घ.
4. उस्ये घ.
5. उस्ये चिलि० घ.
6. शम्यि. घ.

११४. [1]इत्थ ॥ १० ॥

[2]इत्थलिङ्गायामृचि ना भवति । इत्थाहिसो (११.१.१७) महयन्तः[3] (४३९) इत्थ ॥ १० ॥

॥ इति प्रथमो दशाकः ॥

---

११५. नव्योष्ठ्यरयोः ॥ १ ॥

न विनि पादे ओष्ठ्यपरयोरक्षरयोरा भवति । पुरूतमान्यस्मै (३२२) गूढे (३२६) प्रवोमहे (३२८) प्रमन्दिने (३८०) दिव्यं घृणी (४६१) निनीति ? पिणाइ (१२.१.४) ओष्ठ्यपरयोरिति ? त्वमग्ने (९६) एवाहिवीरः (३८५) यनिर्णिजे (५५१) चकामे (३१८) न सार्वावतीत्यधिकारः । आष्ठ्यादिर्वा । नव्योष्ठ्यरयोः ॥ १ ॥

११६. घे ॥ २ ॥

दीर्घेऽक्षरे आ भवति । हर्यतआ (२२८) शम्बरंमदे (३९२) चकामे (३१८) स्ये । घे ॥ २ ॥

११७. इक्षम् ॥ ३ ॥

इकारोऽक्षरमा भवति । अयन्तआ (४.२.३०) इमेतआ (६.१.४;१०.१.१२,१३) आतूनआ (५.१.१६) सुदुघामा (४.२.३६)

---

1. इक्य च  इत्थलिङ्गायां चर्चि ग.
2. इक् च लि० च.
3. ऋचीत्थलिङ्गं नास्ति ।

२१ ४            २ १
अधाहिया[1] ( ११.१.९ ) अक्षरमिति ? अपादुशी ( ४.२.१ ) प्रभृतीनि ।

अभि ( १६८ ) त्वामिद्धि ( २३४ ) वृद्धाद्विशेषः । इक्षम् ॥ ३ ॥

## ९१८. [2]सण् वात्ति ॥ ४ ॥

२१ १
संयोगिनि पर्वणि द्वैध त्मिग्रास्येवा भवति । आमन्द्रैरा ( ६.२.२७ )
२११ १    १        २ १
हाओहायस्मोममा ( १०.२.३ ) निवृत्तानि । इमास्तई ( ५.२.१२ )
२१ १        २ १
ब्राह्मणादो ( ६.१.२२ ) स्ये-पद्यावर्ड ( आ. १.१.१ ) [3]माधुछन्दसे ( आ ३.२.४ ) चतुर्थोचस्य तु विशेषः । मण् वात्ति ॥ ४ ॥

## ९१९. [4]अनु ॥ ५ ॥

[5]पादान्ते प्रत्यये आ भवति । एह्यू ( ७ ) द्विः । नव्यंगीर्भिः ( १४४ ) सुन्विरे ( २९३ ) मानइन्द्र ( १२८ ) [6]यज्ञाशिरः ( १४५ ) श्रायन्तः ( २६७ ) दुदुहिरे ( ५६० ) वमन्तः ( ६१६ ) इन्द्रसुतेषु ( ३८१ ) इकार इत्यधिकारः । अनु ॥ ५ ॥

## ९२०. नेऽनीचाद्दि ॥ ६ ॥

पवमानेऽ[7]नीचाच्चतुर्थ आ भवति । इकार इत्यधिकारः । [8]त्रादि-

---

1. असाह्रिया-च
2. सम्पावति क / सायावति घ
३. मधुच्छन्दसि घ
4. अङ्ग च
5. पदान्ते ग.
6. याशिरः क च
7. रानिप्राया घ.
9. अनीचान्‌मिकार आ भवति। चतुर्थ इत्यधिकारः क ख ग च

ष्ट्या ( ४६८ ) विश्वाअर्पन् ( ४८९ ) परित्यम् ( ५५२ ) दुदुहिरे ( ५६० ) वृपाहरिः ( ५६२ ) द्विः । अज्ञातायाम् ( ५६४ ) पवमाने ? विधुं प्रभृतीनि । अनीचादिति ? वृहन्नधि ( ५५४ ) इकारः ? यस्ते मदः ( ४७० ) चतुर्थः ? पर्येपारी ( १३.१.३२ ) नेऽनीचादि[1] ॥ ६ ॥

## ९२१. नप्रथमयुङ् क्षायाः[2] ॥ ७ ॥

अप्रथमयुक्तं रक्षाया आ भवति । त्वमिन्द्रयशाः ( २४८ ) योराजा ( २७३ ) यतइन्द्रभयामहे ( २७४ ) ऋचं साम ( ३६९ ) [3]एन्द्रयाहि ( ३४८ ) सोम उप्वा ( ५१५ ) अप्रथमयुक्तमिति ? त्वमग्नेगृ ( ६१ ) [4]उतस्यानः ( १०२ ) पुरूत्वा ( ९७ ) त्रिः[5] । पूर्वयोरेकाक्षरा । यत्रतेचित् ( २४४ ) यच्छक्रामि ( २६४ ) इन्द्रायप ( ५२० ) अनीचादित्यधिकारः । नप्रथमयुङ् क्षायाः ॥ ७ ॥

## ९२२. दिक् पड्वतः ॥ ८ ॥

चतुर्थोचस्य पड्वत आ भवति । [6]वयं घाते ( २३० ) इन्द्रनेदीयः ( २८२ ) सोमउप्वा ( ५१५ ) इन्दुः पविष्ट ( ४८१ ) पड्वत इति ? [7]आयाहि (२२७) प्रभृतीनि । [8]निपूतः ( १५९ ) नमुचेः ( २११ ) विश्वाद्वेपांऽसि ( ४६३ ) इकारश्चतुर्थ इत्यधिकारः । दिक् पड्वतः ॥ ८ ॥

---

1. नेनिचादि घ
2. युक्तायाः क. ग.
3. इन्द्रयाहि क. ख. ग.
4. उतस्यनः क. ङ. तस्यामनः घ.
5. द्विः क. ग. घ.
6. वयंघातं ग.
7. आहिप्रभृ० ङ.
8. निवृत्तः ङ.

## ९२३. न ॥ ९ ॥

नयतश्चतुर्थोचस्या भवति । एन्द्रसान ( १२९ ) मरामतिभिः ( ५७३ ) न ॥ ९ ॥

## ९२४. शवति जारा[1] ऽनकारी ॥ १० ॥

शवति साम्नि [2]जारायाश्चतुर्थ आ भवति; अनकारी । इन्द्रोमदा ( ४११ ) यस्तेमदः ( ४७० ) पवित्रन्ते ( ५६५ ) अयंपूपा ( ५४६ ) पुरोजि ( ५४५ ) असर्जि ( ४९० ) अतीपङ्कयोः ( आ. १.२.२२,२३ ) शाक्वरवर्णे ( आ. २.१.१९ ) शवतीति ? देवीजनि ( ३७९ ) जारायाः ? [3]सूरोनहि ( ८३ ) [4]अनकारीति ? [5]त्रहानृभिः ( ४११ ) महानाम्नीषु । शवति जाराऽनकारी ॥ १० ॥

इति द्वितीयो दशकः ॥

---

## ९२५. यज्ञे ॥ १ ॥

यज्ञे [6]चानकार्या भवति । कया ( १६९ ) अयमुते ( १८३ ) परिस्वानोगि ( ४७५ ) अयावीती ( ४९५ ) वसन्तः ( ६१६ ) अनकारीति ? अत्रैव । यज्ञे ॥ १ ॥

---

1. राजा घ. नकारि. मै पा.
2. राजायाः घ
3. सूर्योनहि ग.
4. अनकारीत्यत्रैव । इतः परं माप्यांशो घ. न.
5. त्रहान्मत्रिः ङ.
6. चनकर्या० ग.

९२६. णि[1] ॥ २ ॥

णकारिण्या [2]आराया आ भवति[3] । घृतेन ( ७० ) द्वन्द्वाष्टमे ( आ. २.२.८ ) न्यस्मिन् ( ३१३ ) योनिष्टे ( ३१४ ) चतुर्थ इत्यधिकारः । णि ॥ २ ॥

९२७. गृण्या न्ताक्षरे ॥ ३ ॥

गृण्या [4]अन्ताक्षरे प्रत्यये आ भवति । चर्षणीधृतिः ( २४८ ) वयेमिरे[5] ( ३४२ ) [6]त्रिदेदिषम् ( ४६६ ) णदिद्युते ( ४९७ ) अन्ताक्षर इति ? श्रुधीहवम् ( २९ ) तन्तेमदम् ( ३८३ ) गृण्यान्ताक्षरे ॥ ३ ॥

९२८. ष्वायाश्चङ् खट्[7] ॥ ४ ॥

सूष्वाया आ भवति द्वितीयं चेदक्षरं नीचम् । उपनोहरिभिः ( १५० ) इषमूर्जम् ( १७३ ) मात्वाकेचित् ( २४६ ) शिक्षाणः ( २५९ ) परिधीँरति ( ५१६ ) [8]पवन्ते ( ५१८ ) शिशुम् ( ५६८ ) विश्वावसू ( ५८१ ) द्वितीयं नीचमिति ? जीवाज्यो ( २५९ ) [9]येषामिन्द्रः ( १३३ ) ष्वायाश्चङ् खट् ॥ ४ ॥

---

1. नि. इत्येव सूत्रं युक्तम्.
2. जरायाः ग.
3. अत्र द्वितीयदशरः समाप्तः इति घ. कोशे समुपलभ्यते। पुनः यज्ञे प्रभृतिर्लिखितम्।
4. अन्तेऽक्षेर ग.
5. वियेमिरे. ग. वयोमियरे घ.
6. विदेत्रिदिपम् घ. विदेदिषा. ङ.
7. इखट् ग पट् इति मै. पा.
8. परन्ते ग.
9. एषमिन्द्रः ङ. सन्दिग्धमुदाहरणम्।

## १२९ चिक्रात्पर्वान्ते ॥ ५ ॥

चिक्रात्पर्वान्ते [1]प्रत्यये आ भवति । पुरोहितः ( ४८ ) स्तमर्डिता ( २४७ ) इन्द्रं गिरा ( ३५७ ) मृज्याद्ये ( १५.१.६ ) मानाऽ२३इपाइणाः ( १५.१.२१ ) पर्वान्ते ? साऽ२ती ( ६.२.१० ) प्रभृतीनि । चिक्रात् ? पिबज्येष्ठम् ( ३४४ ) चिक्रात्पर्वान्ते ॥ ५ ॥

## ९३०. आद्वप्रथम्यूष्मणि ॥ ६ ॥

अकारात्परं वर्गप्रथम्यूष्मणि प्रत्यये आ भवति । कयाशचिष्ठया ( १६९ ) स्यरतिम् (          ) दीदयति ( ४१९ ) समर्पति ( ५५७ ) अकारात् ? अस्तिसोमः ( १७४ ) चर्षणीधृतिः ( २४८ ) प्रथमीति ? शयोरभि ( ३३ ) महाऽ्अमि ( ३४६ ) ऊष्मणि ? सपर्यति ( १४२ ) आद्वप्रथम्यूष्मणि ॥ ६ ॥

## ९३१. निक्षे मन्द्रात् ॥ ७ ॥

निधनाक्षरपर्वणि मन्द्रादा भवति । गाऽ५इरोऽ६हाइ ( १.१.१६ ) दाऽ३४५ऽइओऽ६हाइ[2] ( १० १.१५ ) थाऽ५इवोऽ६हाइ ( ३.१.३,४ ) [3]जाइनादीनि ( ५.२.२५ ) अन्यत् । हीऽ२३४पी ( १.१.१ ) ईऽ२३४ती (१.२ २) ईऽ२३४न्द्राः (३ २.२९) एऽ२३४ही ( ४.१.१५ ) माऽ२३४हे

---

1 पर्वान्त्येऽक्षरे प्रत्यये ड
2 सन्दिग्धमुदाहरणम्.
3 जनितादीनि क घ जाइनादीनि स ग. न

(६.१.३७) ध्याऽ२३४ते ( २.२.३० ) निक्षे ? प्रतिदहति ( स्तोभः ) निक्षे मन्द्रात् ॥ ७ ॥

## ९३२. उण्योष्ठ्यचुरे[1] तुषु ॥ ८ ॥

उस्थिनि प्रत्यये ओष्ठ्यादिपरेषु चतुर्ष्वक्षरेष्वा भवति । [2]अन्त्ये । वसुरग्निः ( ११० ) इन्द्रोदधी ( १७९ ) इन्द्रविष्ण ( ३८४ ) धीमहि ( ४१९ ) उस्थिनि ? महिव्रतः ( ५२४ ) ओष्ठ्यादिपरेष्विति ? आद्ये वसुरग्निः ( ३.१.३४ ) न्यस्मिन् ( ३१३ ) ईयानःक्र ( ३२२ ) शविष्ठध्व ( ३४७ ) परीतोषि ( ५१२ ) ओष्ठ्यचुरे तुषु ॥ ८ ॥

## ९३३. [3]खु भिः ॥ ९ ॥

द्व्यक्षरे पर्वणि भिश्शब्द आ भवति । [4]महोभिः ( ६ ) वह्निभिः ( ५० ) नृभाइः ( ११.१.२३ ) ममद्रिभिः ( ५१२ ) व्रततृतीये ( आ. ४.१.३ ) द्व्यक्षर इति ? व्रहानृभिः ( ४११ ) एनृभीः ( १५.१.२९ ) खु भिः ॥ ९ ॥

## ९३४. मन्ये ॥ १० ॥

[5]मन्येयायाश्च भिशब्द आ भवति । प्रतिवस्तोरहद्युभिः ( ६३२ )

1. अरे. ड.
2. अस्ये क.
   एभि ड.
3. महेभि. ग.
4. मन्ययायां च. ड.

मन्ये ॥ १० ॥

॥ इति तृतीयो दशकः ॥

९३५. ती ॥ १ ॥

तीशब्दश्च मन्येवांयामा भवति । अपानती ( ६२९ ) ती ॥ १ ॥

९३६. भे दिशु[1] दन्तिनि ॥ २ ॥

स्तोभे प्रत्यये [2]अपदान्तो दन्तिनि पर्वण्या भवति। वायोरनी ( १३ ) प्रत्यस्मै ( ३५२ ) योरयिं वः ( ३५१ ) [3]वर्षाहाउ ( ९.१.१० ) योदीर्घजि ( ५४५ ) दन्तिनि ? वर्मी ( ५८५ ) स्तोमे ? इमास्तइ ( ५.२.१२ ) भे दिशु दन्तिनि ॥ २ ॥

९३७. रे सखायाः ॥ ३ ॥

रे सखाया आ भवति । श्रत्तादीनि ( १०.१.८ ) श्राजन्ति (६१५) रे सखायाः ॥ ३ ॥

९३८. णंकृणु ॥ ४ ॥

[4]णंकृण्वायां चा भवति । इमं वृषणम् ( ५९१ ) विश्वतोदावन् ( ४३७ ) श्राजाअग्निर्मूर्धा ( आ. ६ १.१ ) आदित्यव्रतातीपङ्क्ते ( आ.६.२. ४ ) परिधिषु ( आ. ६.२.११-१६ ) णंकृणु ॥ ४ ॥

---

1. दिङ् ह.
2. अपदान्ते ग.
3. वृद्धाहाड. ग.
4. णंकृण्वायाश्च ग

## ९३९. पिण्याम् गेः ॥ ५ ॥

पकारिण्यामृकारो गेः पर[1] आ भवति । मवार्पाऽ१वाऽ२३ ( ३.२.१० ) [2]धृष्ट्धृ ( २४३ ) आनीरष्ट्र ( ४०५ ) पकारिण्याम् ? मम्–[3]गृऽ२३-ईऽ३४हा ( ५.१.१९ ) [4]गेः पर इति ? ईगेहाऽ२३इवृऽ३ ( २.१.२९ ) हन्ताऽ२योऽ२३४चृ ( ९.१.५ ) उलोकाऽ३कृऽ२ ( १०.१.३४ ) इपश्स्तोतृ ( ४१९ ) ध्मारवजकृऽ३त् ( ७ २.१३ ) [5]अपदान्त इत्यधिकारः । पिण्याम् गेः ॥ ५ ॥

## ९४०. [6]सन्ध्ये ॥ ६ ॥

सन्ध्ये स्तोभ आ भवति । आग्नाओऽ२३४वा ( १.२.४;२ २.१९ ) द्विः[7] । त्राइणाओऽ२३४वा ( १.७ ४ ) द्वाइपाओऽ२३४वा ( ४.१.१४ ) शाइशाओऽ२३४वा ( १७ १.१५ ) माइत्राओऽ२३४वा ( १६.१.२५ ) नूपाओऽ२३४वा ( ४ १.१२ ) भूर्णाओऽ२३४वा ( ८.१.२८ ) त्रमिन्द्रा-ओऽ२३४वा ( ९ १.५ ) आग्नाओऽ२३४वा ( ८.१.२ ) तगाओऽ२३४वा ( १७ १.१७ ) स्नानाओऽ२३४वा ( १७ १.३९ ) सस्पताइमद्भूता-ओऽ-२३४वा ( ५.१.२८ ) मादो-चाराओऽ२३४वा ( १३.१.१. ) तंवोदस्म-

---

1 परतः क ग ङ.
2 धृष्ट्धा ग.
3 गृहा ग
सम्, इहा ङ
4 गेः पर इति क ख ग घ. न
गे परत इति ङ
5 अपादान्त इत्यधिकार. क
6 सन्ध्यः घ
7 द्विः क ख. ग. घ. न.

४५१ ३ २ ३ ५ ४३४१५ १ ३ २ ३ ५
सृती-पहाओऽ२३४वा ( ६.१.३५ ) वयमेनमिदा ह्यियाओऽ२३४वा ( ७.२.
१ २ ३ ५ १ २ ३ ५
१६ ) स्यामाओऽ२३४वा ( ४.१.१८ ) [1]घाशाओऽ२३४वा ( १३.१ १ )
१ २ ३ ५ १ २ ३ ५ १ २ ३ ५
आऽशाओऽ२३४वा ( १४.२.२१ ) [2]आच्छाओऽ२३४वा-क्राशाओऽ२३४वा
१ २ ३ ५ ३ २ ५
( १४.२.२१ ) द्राइमाओऽ२३४वा ( १४.२.१६ ) शृणाऽ३४औहो
३ २ ५ २ १ २ ३१ २ २१ न
( ४.१.२३ ) फराऽ३४औहो ( ८.२.२९ ) ऋतावासा-औहोऽ३४इ-औहोऽ-
२ २ १ २ २ २ १ २ १
३वा ( ७.१.१७ ) [3]उलाऔऽ३होऽ३४ ( १०.१.३३ ) भृताऔऽ३होऽ३४
१ २ ३१ ४१५
( १७.१.३३ ) अग्नाइन्नमाऽ३४-औहोवा ( १.१.३० ) सन्ध्य इति ?

इदन्तए ( ६५ ) सन्ध्ये ॥ ६ ॥

## ९४१. गिनि स्यपट् ॥ ७ ॥

प्रथमिनि स्तोमे द्वैधं [4]सकारिण्येत्रा भवति अपडक्षरे गीते ।
१
श्राप्रथमान्यस्मै ( ४४ ) क्वेदसि ( २७१ ) [5]न ईरसे ( ४२८ ) स्यसाऽ-
३ २
२इदसाइ ( १४.१.३५ ) निवृत्तानि । द्युम्नमस्मभ्यम् ( ८१ ) वृत्राय
हन्तवे ( ११९ ) परिवृत्राणि ( ४२८ ) [6]भूम्याददे ( ४६७ ) सनद्रयिम्
( ४९६ ) समऽहविः ( ५१२ ) वम्नैनावसूनि ( ५४१ ) [7]वं आयुनि

---

१ २ ३ ५
1 यशाओऽ२३४वा घ
2. आर्चाओवा ड.
3. उणाऔहो ग.
4. सकारिण्या एवा. ग.
5 न ग. न.
6. भ्रम्याद्दे ड.
7. वर्तयुनि. घ.
वंआयुनि ड. न.

( ५५० ) धनुष्टन्व ( ५५१ ) अपडक्षर इति ? [1]रायेपनोयसे ( ८१ ) गिनि स्यपट् ॥ ७ ॥

## १४२. अन्त्ये ॥ ८ ॥

अन्त्ये पादे आ भवति । न्यक्रमीत् ( ४९० ) ममद्रिभिः ( ५१२ ) विपामग्रे ( ५५१ ) अन्त्ये ॥ ८ ॥

## १४३. ये ॥ ९ ॥

येवति च पादे आ भवति । कृत्नुमूतये ( १६० ) [2]सघाधऊतये ( २३७ ) धियावोमे ( ३६० ) पर्युपु०-तायाइ ( ११.२.१६ ) आत्वामह ( २४५ ) ये ॥ ९ ॥

## १४४. रान्युतावतः ॥ १० ॥

स्वरान्तं युतावतः पर्वण[3] आ भवति । [4]सनाऽ२३-ओवाऽ१-आइडाः-रुद्रा ( ११.२.२७ ) करोचसे ( ८३ ) [5]ह्वयामहे ( ५७ ) दसीउमे ( ५४६ ) पुराजसि ( ४६ ) चमिन्वसि ( ५१७ ) तएमसि ( १४ ) स्वरान्तमिति ? पतिम् ( ३४३ ) छमत्पतिम् ( ३५४ ) यआहुतिः ( ३६८ ) भाष्यम् । मनीषिभिः ( ५५९ ) रान्युतावतः ॥ १० ॥

॥ इति चतुर्थो दशकः ॥

---

1 रायेपानीयामे घ.
2. सघाधनूतये. ग.
3. युतावत्पर्व इति साधीयान्पाठः
4. सो ओवा घ.
5. ह्वयावहे ख. ग. ह्वयावोमहे घ.

## ९४५. स्तोत्रे ॥ १ ॥

१ २ १ ४ १ २
स्तोत्रे चा भवति । यःकाऽ३ओऽ२३४वा ( १०.१.२३ ) हार्दाऽ३-
१ १ १ १ २ १ २
ओइ ( ११.२.२९ ) विश्वावसुनिवाऽ३ओयेऽ३ ( १७.२.२१ ) स्तोत्रे ॥१॥

## ९४६. सन्ध्यमिग्[2] ॥ २ ॥

सन्ध्यक्षरस्य द्वैधं पदान्तस्य[3] आ भवति । चक्षुषि (आ.२.२.१७)

नियतं च निवृत्तं च । सन्ध्यमिग् ॥ २ ॥

## ९४७ यौ ॥ ३ ॥

२ १ १
यौ च प्रत्यये सन्ध्यक्षरं पदान्त आ भवति । १स्यनोऽ२३-नाऽ२-
३ ४१२
साऽ२३४औहोवा[5] ( ४.१.७ ) संमील्यनिधने ( आ.२.१.३२ ) यौर्महा-
१ २
दिवाकीर्त्ये ( आ. ६.१.१६ ) सन्ध्यमिति ? ताऽ२इकूऽ२३४० ( २.१.
१ ३ ३ २ ३ २
२२,२३ ) सूऽ२वूऽ२३४० (१०.१.१९) [6]द्रमूऽ३४० ( ६.१.५ ) आगाऽ३
१ ३ २ १ १ २
साऽ२इपूऽ२३४० ( ७.२.११,१२ ) अताऽ२३ःपाऽ२र्धूऽ२३४० ( १०.२.
१६ ) सम्मील्यतृतीये ( आ. २.१.२७ ) आयुः-इन्द्रश्वर [7]व्रतद्वितीयायाम् ।

( आ. ४.१.१४ ) यौ ॥ ३ ॥

---

1. सूत्रं घ. न.
2. मिङ् ङ.
3. पादान्तः घ.
4 स्यैना ग.
5. औहोवा क. ख. ग. घ. ङ. न.
6 द्र ग. न.
7. घृतद्वितीयायाम् क. मनतृतीयायाम् ख. ग.

## ९४८. खि ॥ ४ ॥

खि चा भवति । आचखि-शा० ( १६.१.६ ) ऐरये ( आ.१.१.१७ ) चतुष्टोभे[1] । निवृत्तानि । [2]औहो प्रभृतीनि । पुना द्वादशे ( १४.१.३२ ) उदुह्यस्य विशेषः । खि ॥ ४ ॥

## ९४९. इत् ॥ ५ ॥

इत्थं चा भवति । धाइराऽ३४० ( १६.२.३० ) पाराऽ३४-औहोवा ( १७.१.१४ ) पतिमाग्नि ( आ. १.२.१२ ) महित्रीणायाम् ( आ. ३.२.१,२ ) ज्योतिश्शब्दो रहस्ये । इत् ॥ ५ ॥

## ९५०. [3]मादेः ॥ ६ ॥

मकारादेः पर्वण आ भवति । मरुत्वाता-औहौहोऽ२३४वा ( १२.२.२९ ) निवृत्तानि । माध्वारजाऽ२ऽसिम्रऽ३ ( ६.१.१२ ) मारूऽ३४-औहोवा ( १२.२.२७ ) मादेः ॥ ६ ॥

## ९५१. हि ॥ ७ ॥

हकारे प्रत्यये आ भवति । नावाऽ२३हाऽ३४३इ ( १.१.९ ) [4]सयाऽ२३हाऽ३४३इ ( १.१.१४ ) [5]तुचाऽ२३हाइ ( १.२.३६ ) देवेषुधि

---

1. चतुष्टोभो ग. ङ. क्रतु उक्षु क. ख. ग.
2. आदोप्रभृतीनि क. ख. ग.
3. मादो घ.
4. सायाहाइ घ.
5. तुचाहाइ ग.

( ३५५ ) ईशानः ( ९९ १ ) सखायआ ( ५.१.८ ) दि-व्याम्-वृणाऽ२३हाइ ( १२.१.३२ ) व्रततृतीये ( आ.४.१.३ ) सखायआऽ२३० ( १०.२.३४ ) [1]हराऽ२३हो ( ८.१.१४ ) मनाहोइ-पाऽ२३इणाः ( १५.१.१७ ) दाइ-वाऽ२हो ( १.२.१३ ) अमृतम्-जाताऽ२३वा-हुम्माइ ( १.२.२५ ) सुताय-मादाऽ२३या-हिम्माऽ२१२ ( १६.१.१२ ) तद्वैव्यम् ( ८२ ) सहस्रेणेवशि[2] ( २३५ ) भागन्नदी ( २६७ ) ऋचीपम ( २६९ ) सोमपीतये ( २९० ) इन्धे ( ७० ) शुनोहृदे ( १८४ ) धेनुधे ( २३९ ) रेवतीर्न आधे ( आ. २.१.१७ ) युक्तारथे हिरण्यये ( २४५ ) सोम इव पवते चारुरग्नये ( ६०९ ) [3]तदाहाउवा (  ) इत्थाचन्द्रमसोगृहे ( १४७ ) जमदग्निव्रते ( आ. ४.२ १५ ) हकार पर इति १ ऐहीयैही हाऽ२३४इ (  ) हि ॥ ७ ॥

## ९५२. [4]इनु प्रथम ओर्वि[5] ॥ ८ ॥

[6]पदान्तस्य प्रथमस्वरे प्रत्यये द्वैधमुकाराद्कार्या भवति । [7]शन्नः ( ३३ ) कस्यनूनम् ( ३४ ) तमिन्द्रम् ( ११९ ) योगेयोगे ( १६२ ) प्रथश्च ( ४९९ ) शीयवस्व ( १२२ ) तोभिस्तोभैः ( २५० ) प्रभृतीनि[8] ।

---

1. हराऽ२य इत्यन्त्य हो. ड.
2. वशि. क. ग. न.
3. तदा हाइवा. ग.
   तदाहाइव इन्धा. ड.
4. इडु. ड.
5. ओर्वा ग.
6. "पदान्तः" युक्तः पाठः
7. शः क.
8. प्रभृतीनां क. ख. ग. ड.

१ — १ २
तुवाऽ२होइ-द्युम्नम्० ( १६.१.२८ ) निवृत्तानि । भरद्वाजे ( ३७ ) मन्वार-
१ २ १
भामहे ( ९१ ) वाजे ( १६३ ) [1]तुते ( २३९ ) वाइश्वेऽ२होइ ( ६.२.
३२-
१७ ) श्रचे ( ३७१ ) हवेऽ३० ( १०.१.२५ ) [2]भरे ( ३०९ १ ) परि
३१ १
( ४२७ ) पूष्णे ( ४२७ ) अग्रेऽ३-हो० ( १७.१.२७ ) [3]मरुत्वते
( ४६९ ) द्विः । इन्द्रायेन्दो ( ४७२ ) इलान्दे-हवन्ते, चकामे ( आ.
५.१.४ ) देवस्थाने ( आ. १.१.१५ ) [4]राजने ( आ. ४.२.१९ )
१ २
अग्निश्चिकितिः ( ४४७ ) हराइराऽ१इतीऽ२३ ( १३.१.११ ) [5]अभीनोवा
३ १ २ १ २१ १ २
( ५४९ ) पदान्तः १ मघायआ ( ५.१,८ ) प्रथम इति १ योनाऽ२३उहाइ
( १४.१.१२१ ) इत्रु प्रथम ओर्वि ॥ ८ ॥

## ९५३. इ नन्दायाम् ॥ ९ ॥

इकारस्य द्वैधं नन्दायामां भवति । अस्माकमर्धमागहि ( १८१ )
तेन मा सꣳसृजामसि ( ६२४ ) निवृत्तानि । कृणुध्वमित् ( २८५ )
इन्द्रंवाणीः ( १९८ ) अभित्वामि ( ४०७ ) परे देवस्थाने ( आ.१.१.१६ )
अग्निर्मूर्धायां शुक्रिये च ( आ.१.२.७,६.१.१,६.१.५ ) [6]यज्ञायाम्
( ६०१ ) इ नन्दायाम् ॥ ९ ॥

---

1. तु ग. न.
2. परे क. ख. ग. घ.
3. मरुत्वन्ते. ङ.
4. रा क. घ. न.
5. आभीनोवा. ग.
6. रज्ञायाम् घ.

## ९५४ द्वन् ॥ १० ॥

उदुद्यान्तं ( न्त्यं ? ) चा भवति । कवाइ-[1]हिम्ऽ३स्थिहिम् ( १३. २.७ ) [2]मऽ३पाइन्वोअर्काऽ२३४५इः ( १५.२.१९ ) महानाम्नीषु ॥ द्वन् ॥ १० ॥

॥ इति पञ्चमो दशकः ॥

---

## ९५५. न जङ्घायाम् ॥ १ ॥

न जङ्घायामा भवति । ऋजसेऽ३हाइ[3] ( १.१.२१ , प्रमृपेऽ३हाऽ-३इ ( २.१.२० ) स्तूपऊपूऽ३हाइ ( १०.२.१५ ) सोम-पतेऽ३हाऽ३इ ( ११.१.३ ) न जङ्घायाम् ॥ १ ॥

## ९५६. यि ॥ २ ॥

यकारिण्यां जङ्घानायां ना भवति । धियाकृणया ( ४२८ ) योनौननेषु ( ५०३ ) यि ॥ २ ॥

## ९५७. दोयुक् ॥ ३ ॥

न दोपायुक्तं स्तोम आ भवति । देवान्देवयतेऽ२ ( ३.१.१८ ) सखाय इ ( १६३ ) धोर्धारा ( १९५ ) [4]हरयइन्द्रके ( २४५ ) तमीहोऽ२इ

---

1 हुम् हुम् ग.
2. महीपाइन्वोर्कैः क. ख.
महीं ग न
3. जन्यसे हाइ घ
ऋजसे हाइ ङ.
4. हरइन्द्र. ग.

( १५.१.२४ ) दोयुक् ॥ ३ ॥

## ९५८. चद ॥ ४ ॥

चदक्षसायुक्तं स्तोभे ना भवति। तामाऽ१हुवेऽ२ ( २.१.८ ) वासिष्ठे-अपीपेमेहवत्रिणम् ( २७२ ) चद ॥ ४ ॥

## ९५९. [1]गिगादौ ॥ ५ ॥

प्रथमोच्चादौ साम्नि ना भवति। पवित्रन्ते[2] ( ५६५ ) वार्त्रघ्ने ( आ. ४.२.१७ ) [3]व्रतान्त्ये ( आ. ६.२.२१ ) गिगादौ ॥ ५ ॥

## ९६०. एङ्श्चिक्रः ॥ ६ ॥

एकारान्तायामृचि अचिक्र एव ना भवति। योगेयोगेद्वितीये ( ५.१.७ ) आनजे ( ३५५ ) निवृचानि। तदिन्द्रते ( १२६ ) योगेऽन्त्ये ( ५.१.८ ) पुष्वण्वते ( २७० ) एङ्श्चिक्रः ॥ ६ ॥

## ९६१. [4]विङ्ङवृद्धात् ॥ ७ ॥

विधायां प्रत्यये [5]द्वैधमवृद्धान्ना भवति। ओजस्तदस्य ( १८२ ) अनवे ( २७९ ) अग्निमन्वा ( ९१ ) विधायाम् ? इन्धे ( ७० ) अवृद्धात् ? युक्तारथादीनि। विङ्ङवृद्धात् ॥ ७ ॥

---

1. गिह्रादौ घ.
2. पवित्रन्ते प्रभृति योगेयोग-पर्यन्तं घ. न.
3. मृतान्ते क.
4. विधवृद्धात् ग.
5. द्वैधं वृद्धा० ख. घ.

## ९६२. गिमध्यम् ॥ ८ ॥

गिमध्यं चावृद्धादा भवति । प्रके ( ७१ ) अभिप्रिया ( ५५४ ) अधिसानो ( ५२९ ) [1]गोमाऽ२३इहोंइ ( १३.२.२१ ) मानुषाऽ२३इहोंइ (१३.२.३०) सयाऽ२३हाऽ३४३इ (१.१.१४,१५) दक्षाऽ२३होइ (५.१.१८) [2]तारमुहुवाऽ२३हो ( ७.२.३४ ) वृषे ( २३९ ) गिमध्यम् ? अमीनोवा ( ५४९ ) अवृद्धात् ? सानीऽ२३होइ ( १ २.१३ ) भरद्वाजादीनि । भासे ( आ. ६ १.८ ) गिमध्यम् ॥ ८ ॥

## ९६३. ष्ठ्यादेः ॥ ९ ॥

[3]ओष्ठ्यादेरक्षरमा भवति । वराहोअग्ने ( ५२४ ) प्रनोनिपत् ( ४११ ) मिद्धग्रहणादुस्थस्य निवृत्तिः । आयूऽ२३हो ( ९.२.२० ) समूऽ२होऽ१। ( ६ १.१४ ) ष्ठ्यादेः ॥ ९ ॥

## ९६४. कण्ठ्ये ॥ १० ॥

कण्ठ्ये स्तोभे आ भवति[4]। स्यदीधितिम् ( ५७० ) इदकम् ( स्तोमः ४ ? ३० ) चित्राद्विशेषः । निवृत्तानि । [5]माक्रातूरीऽ२३दाऽ२ ( १७.२.४ ) हीऐहीऽ२३४या ( १४.१.१८ ) ईयऽयाऽ३हाइ ( ९.१.२ ) ईऽ४यइया (९ १ २) अर्कतृतीयोपान्त्ये ( आ.१.२.१४ ) यच्चक्रासि (२६४)

---

1. गोताइहों ग.
2. तारमुहुवाये क ख ग घ
3. आष्ट्या° ङ
4. त्रवति
5. मक्रतुवीदा ग.

प्रथश्च ( ५९९ ) वाचोव्रते ( आ. ४.१.१ ) जमदग्निव्रते ( आ. ४.२.१५ ) कण्ठ्य इति ? इतीऽ२इति ( आ. ६.२.१ ) वत्सव्रते ( आ. ५.२.२१ ) [1]इकारग्रहणं तु । कण्ठ्ये ॥ १० ॥

॥ इति षष्ठो दशकः ॥

---

## ९६५. द्वितीयी ॥ १ ॥

द्वितीयी चाष्टद्धादा भवति । [2]द्रहरिमाइः० (६.२.२७) इन्द्रंगीर्भाइः ( १०.१.१८ ) विरश्शिन्नाइ० ( ८ २.१७ ) निवृत्तानि । त्सिबर्हिषि ( १ ) होतारं वि ( ३ ) अताऽ२३इथीम् ( १.१.९,१० ) पाहोइवीऽ३इया ( १.१.१२ ) आरातेः ( १.१.१३ ) अग्न इत्थे ( ७ ) [3]वायोराऽ२३नी ( १.१.२२ ) पतिः कविः ( ३० ) वृहद्भिः ( ३७ ) अग्नेविवान् ( ३९ ) घ्रमरतिम् ( ४५ ) अग्निस्तुऽ२३दी ( २ १ १६ ) चनादधि ( ५२ ) वाघद्भिः ( ५७ ) वीवीऽ२ ( २.१.२६ ) सुप्रतूऽ२३र्तीम् ( २.१.३३ ) विस्वत् ( ६८ ) नमोभिः ( ७० ) अग्नोष्यग्निः ( ७३ ) द्यौरिवामि ( ७५ ) विश्वेयस्मिन् ( ८५ ) रुद्राङ्आऽ२३दी ( ३.१.७ ) विपांज्योऽ२३ती ( ३.१.१३ ) आनाभाऽ३थीन् ( ३.२.२३ ) सखायइन् ( १६३ ) माहाऽ२न्मा० ( ५.२.४ ) ईशानाऽ२३मी ( ६.१.२७ ) शुचयोवीऽ३पा

1 इकारः ग्रहणन्तु क. ख.
2. तीवा ग.
3 वायोरनी ग

( ७.१.२ ) चन्द्रैर्याति ( २७७ ) यच्छिक्षसि ( २९६ ) विसीमतः ( ३२१ ) अतिष्ठत्[1] ( ३२३ ) आइतीऽ३वाऽ३ ( १०.२.१६ ) स्तोमेभिर्भू ( ४१८ ) शुऽ१क्राऽ२सोवीऽ२ ( १३.२.९ ) धनुत्रीः ( ५३८ ) अभिप्रियान्त्ये ( १६.२.६ ) वृषामतीनाम् ( ५५९ ) जागृविः ( ५१४ ) क्रीडन्नूर्मिः ( ५८४ ) मर्पसाम्नि ( आ. २.१.१,२ ) लोकसाम्नि ( आ. ५.१.२१ ) निवुत्वान्वाय ( ६०० ) परमेष्ठिव्रते[2] ( आ.४.१.७ ) [3]अपांव्रते ( आ. ४ २.४ ) परिधिषु ( आ. ६.२.११,१२ ) पृथिऽ३व्याः ( २.१.३९ ) निपीऽ३दा ( १५.१.३०,३२ ) इन्द्रीऽ३याः ( १५.१.२७ ) [4]न जह्वायामित्यधिकारः । द्वितीयी ॥ १ ॥

## ९६६. व्यन्तेऽति ॥ २ ॥

मन्द्रान्ते पर्वण्या भवति; अतिलिङ्गे पादे । ऋताव्ने ( १०७ ) ईडिष्वाहि ( ९३ ) मयूररोमभिः ( २४६ ) सहस्रैः ( ३२३ ) उदाऽ२३-माइः ( ११.१.९ ) [5]यद्धस्याते ( ४१९ ) प्रयज्यवे ( ४६२ ) व्यन्ते ? अग्निरस्तृऽ२३दी ( २.१.१६ ) अतिलिङ्गे ? विश्वेयस्मिन् ( ८५ ) [6]जनिमावि ( ५२४ ) व्यन्तेऽति ॥ २ ॥

---

1. तिष्ठद्राश्यतिवा ह.
2. परमेष्ठी व्रते क. ख. ग. घ. च.
3. अहव्रते क. ख. ग. घ. ह
4. न ग. न.
5. व्यद्धस्याते क.
6 जनिमानि क. ख.

## ९६७. विह्व ओः ॥ ३ ॥

[1]विवाह्वे पर्वाणि [2]उकारादा भवति। शुद्धैः ( ३५० ) योजान्विन्द्र ( ४१५ ) निवृत्तानि। सिवह्विपि ( १ ) अच्छानप्ते ( २१ ) जागृवद्भिः ( ७९ ) [3]वचस्तचित् ( १८३ ) नक्षन्ते ( २०१ ) अस्ताराऽ२जेऽ२ ( १२.१.३० ) [4]अभिप्रियान्त्ये ( १६.२.६ ) विह्व ओः ॥ ३ ॥

## ९६८. स्ये पत्याः ॥ ४ ॥

[5]रहस्ये पतिःकाव्या आ भवति। अहामिमानो अक्तुभिः[6] (६३८) नक्षत्रायन्तिऽ३याक्तूऽ१भाऽ२इः ( आ. ६.२.११,१२ ) पतिःकाव्याः ? नव्यसे शुचिः ( ६०९ ) स्ये पत्याः ॥ ४ ॥

## ९६९. [7]अंशु ॥ ५ ॥

[8]अंशुलिङ्गायामा भवति। तोरश्रवसे ( आ. ३.१.६ ) वरुणपश्यमि ( ६३७ ) अपानती ( ६३१ ) द्विः। वागादौ। अंशुलिङ्गायाम् ? बृहन्नधी ( ५५४ ) सयुजाविति ( ३६१ ) स्वयुक्तिभिः ( ६३९ ) न तिलिङ्ग इत्यधिकारः। अंशु ॥ ५ ॥

## ९७०. तरुवत्सु ॥ ६ ॥

तरुवत्स्वक्षरेषु [9]परेष्वा भवति[10]। समिधीमहि ( ९३ ) इन्द्रंगीर्भिः

---

1. विभाह्वे ग.
2. मवारा० क.
3. वाचस्तचित् घ. ड.
4. प्रियान्ते क ग. ग. घ. च
5. रहस्ये र. न
6. अन्तुभिः ग.
7. अशु क.ग ग. अशू. मै. पा.
8. अशुलिङ्गा. क ग. ग. घ
9. परेषु ग न.
10. भवत्यन्ते ग. घ. भवत्यन्त्ये ड.

( २३६ ) स्यासाऽ२आ-औऽ३होऽ३ ( १४.१.३० ) तरुवत्सु ? ऋश्यव्रते ( आ. ५.१.२२ ) [1]दिवित्मती ( ४२१ ) नतिलिङ्ग इत्यधिकारः ॥ तरुवत्सु ॥ ६ ॥

## ९७१. पयय ॥ ७ ॥

[2]त्रिःकृष्टमयकार आ भवति। यन्तारोये ( ३८ ) [3]यद्यादित्य ( २७६ ) तंद्वषम ( ४०३ ) चमिन्वसि ( ५१७ ) जनिमानि ( ५८३ ) आताऽ२३४५इष्टाऽ६५६त् ( ८.२.२१ ) माताऽ२३४५इनाऽ६५६म् ( १५.२.७ ) [4]मघश्र्यी ( ४४१ ) तक्षचान्यये ( १५.२.२३ ) अपकारे ? यात्राहुस्म ( ३६१ ) करइदर्थया ( ४१६ ) पयय ॥ ७ ॥

## ९७२. [5]स्यनु न पु ॥ ८ ॥

सिशब्दः पादान्त[6] आ भवति न पुलिङ्गायामृचि। रथीरसि ( ४१ ) नीमसि ( १७६ ) चरामसि ( १७६ ) पयामसि ( १७६ ) [7]वृत्रतूरसि ( ३११ ) द्युमाऽ१असि ( ५०४ ) सिशब्दः ? [8]धनुत्रीः ( ४३८ ) [9]पादान्तः ? जुहूमसि ( १६० ) यच्छिक्षसि ( २९६ )

---

1. दियत्रमति क. दिवितोमती. ग.
2. त्रिः क. ख. ग. घ न.
3. त्राद्या० ग.
4. मद्यं ग. न. मम. क ख. घ.
5. स्यडु ङ
6. पदान्तः क.
7. वृत्रभूरसि. ग.
8. धनुत्रीः ग. न
9. पदान्तः ग.

नपुलिङ्गायाम् ? यौरिवासि ( ७५ ) पुनाद्वितीये ( १४.१.२२ ) मृज्यपष्ठे ( १५.१.११ ) स्यनु न पु ॥ ८ ॥

## ९७३. सन्ध्यम् ॥ ९ ॥

सन्ध्यमा भवति। पादान्त इत्यधिकारः। अग्न आयाहि ( १ ) शंनोदेवीः ( ३३ ) बृहद्वयः ( ८८ ) स इन्धते ( ८५ ) सुरूप ( १६० ) अभित्वाद्व (१६१) इन्द्रनरायाम (३१८) सत्पते (२८६) मीढुषे ( २८८ ) पाहिगाः ( २८९ ) आत्वा ( ३५४ ) अपावृणस्थे ( ४३१ ) अञ्जते ( ५६४ ) अन्नये। तये सुम्ना ( ३५४ ) लोकमाग्नि ( आ. ५.१.१९ ) विश्वचक्षसे ( ६३३ ) द्वितीये महानाम्नीषु। निवृत्तानि। विशाङ्गाऽ२३इशे ( १.१.२६ ) आच्छाऽ२नाप्नेऽ२३ ( १.२.१ ) माहेनाऽ२३४याम् ( ४. १.१९ ) [1]तिरेतनः ( ३१ ) तिपेनरः ( ४७१ ) आदिद्वोदेऽ२ ( २.१. २४ ) शंयद्गाऽ२३वे ( ३.२.२ ) गोसखास्यात् ( १२२ ) कउग्राऽ२३ःकं ( ६.१.८ ) ऊर्पेऽ१रायाऽ२ ( ६.१ १५ ) [2]नेमिन्तष्टे ( २३८ ) अविधन्वे ( २४६ ) प्रतीनाएऽ२ ( ६.२.३१ ) श्रद्धाहाइतेऽ२ ( ७.२.२८,२९ ) आस्वाऽ२३पे ( ७.२.३१ ) यज्ञांदाऽ१इवेऽ२ ( ९.२.३४ ) रिप्काभाऽ२३इते ( १०.१.२० ) आस्ताराऽ२३ज़ेऽ३ ( १२.१.३० ) [3]सम्रामीऽ३वेऽ२

---

1 लोकेनागः ह.
2. नेमिन्तन्ते क
3 सतमु ये ह.

२ १ १ — १ २ १रविर
( १२ १.३६ ) इन्द्रायाइन्दोऽ२ ( १७ १ ८ ) अधिसानोऽ२० ( १५.२.
११ ) सर्पसाम्नि ( आ. २.१.१ ) लोकमामाये ( आ. ५.१.१८ ( १ )
वैराजे ( आ. २.१.३१ ) सन्ध्यम् ॥ ९ ॥

## ९७४. न्माभे ॥ १० ॥

[1]न्माभेस्वरे प्रत्यये [2]सन्ध्यक्षरं [3]पादान्त आ भवति । कस्तमिन्द्र
३ २ १ २
( २८० ) प्रत्यस्मै ( ३५२ ) निवृत्तानि । श्रुधीऽ३ ( २ १ १७ ) द्रपतीऽ३ः
१ २ ३ २ १ २
( १ २ ३३ ) मपीऽ३ ( ६ २ २४ ) सतीऽ३ ( ६ २ ११ ) तहीऽ३
१ २ ३ २ १
( ११.१ २९ ) हरीऽ३ः ( १७ १.३८ ) पतेऽ३ माऽ२३४दाः ( आ
२१३१
३.२ १४ ) रहस्ये च । [4]याथापताऽ२३इम् ( १० १ १७ ) प्रथमाद्विशेषः ॥
न्माभे ॥ १० ॥

॥ इति सप्तमो दशकः ॥

---

## ९७५. घायास्सस्वरयोर्मे ॥ १ ॥

१२ २
जह्वानायास्सस्वरयोर्मेशब्दथा भवति । ताईऽ३माइ ( १७ १.२ )
१ १ २ २ २ २
वैराजे ( आ २.१.३१ ) निवृत्तानि । गृणानोहव्यदाऽ१ताऽ३ये ( १.१ ३ )
२ १२ २ २ २ २ १ २ २ २
ब्रह्माणस्त्वाशताऽ१क्राऽ२तो ( ९ १ १५ ) उद्घर्शमिवयाऽ१इमीऽ३रे ( ९

---

1 न्माभ स्वरे ङ
न्माभेऽक्षरे क ख ग घ
2 सन्ध्यक्षरः ङ.
3 पदान्त ख ग
4 यथायथादम् घ
यथाऽ१पताऽ२३इम् ग

( ९.१.१५ ) दिविसद्भूमियाऽ१दाऽ३दे ( १२.२.३ ) जह्वानाया इति ? पाऽ३ताइ ( १.२.२८ ) [1]चाऽ३इयाइ ( ३.१.२९ ) ग्माऽ३याइ ( ९.२.११ ) सस्वरयोरिति ? आइपाऽ३ताइ ( ९.२.११ ) चाऽ३दाक्षाऽ३साइ ( १.२.२५ ) [2]यद्धास्याऽ३ताऽ३इ ( ११.२.१ ) मवानस्सद्माऽ१दीऽ३याइ ( ७.१.२६ ) धायास्मस्वरयोर्मे ॥ १ ॥

## ९७६. नवे ॥ २ ॥

नवे शब्द आ भवति । हिमानाऽ२३वाइ ( २.२.२८ ) वार्त्रघ्ने ( आ. ४.२.१७ ) [3]व्रतान्ते ( आ. ५.२.२२ ) महे । नवे ॥ २ ॥

## ९७७. मि ॥ ३ ॥

मिभूतं च ना भवति । पुमाहाऽ१इतेऽ२ (५.२.१६) सुताऽ१इमेऽ२ ( १७.१.३ ) तोयाऽ२इ ( १.१.१ ) ण्वाताऽ२इ ( ९.२.३४ ) [4]सुलिङ्गायामित्यधिकारः । मि ॥ ३ ॥

## ९७८. आन्नविनि ॥ ४ ॥

[5]अकारान्नविनि पाठे आ भवति । नतत्तआ-ग्नाऽ३ऽ० ( २.२.२१ ) सदने ( ११३ ) अश्वपते ( ४०२ ) कामईमहे ( ४०६ ) प्रयज्यवे ( ४६२ ) निपामाऽ१ग्राऽ२इ ( १६ १.३६ ) वचाऽ्स्यस्मै ( ३२२ )

1. चीपाइ ग.
2. यत्वाभ्याताइ ड
3. व्रतान्त्ये क
4. गुलिङ्गा ग
5. आविनारात घ.

अकारात् । ऋताग्ने ( १०७ ) प्रतीनाए२ ( ६.२.३१ ) श्रद्धाहाइते२ (७.२.२८,२९) प्रभृतीनि । बृहद्देवेषु (५५५) एषप्रकोशे२ ( १६.२.१३) योरायाऽ१माऽ२३नेन्ता० ( १७.२.२५ ) आम्नविनि ॥ ४ ॥

## ९७९. खुं त्यादेः ॥ ५ ॥

द्व्यक्षरे पर्वणि दन्त्यादेरा भवति । [1]वरूथ्ये ( २५५ ) नतेवज्रः ( ४१३ ) दमेसमिन्दुभिः ( ३८४ ) देवेभ्यस्मो ( ५२१ ) द्व्यक्षर इति । सुतेषूऽ२३४नाः ( ९.२.२५ ) [2]तोकेताऽ२३४वाः ( १.२.१६ ) तीधेनाऽ२३४याः ( १३.१.१० ) दन्त्यादेरिति । अस्तारम् ( १२५ ) उदेयग्म ( ४०६ ) खुं त्यादेः ॥ ५ ॥

## ९८०. ति ॥ ६ ॥

तकारि च दन्त्यादेरा भवति । सुजाते ( ४२१ ) दीधावति ( ५०० ) [3]नांपवते ( ५५९ ) सुतेषु नः ( ३६३ ) कण्ठ्याद्दन्त्यादेरित्यधिकारः ॥ ति ॥ ६ ॥

## ९८१ मावात् ॥ ७ ॥

मापूर्वादक्षरादा भवति । मान इन्द्र ( २६० ) सधमाये ( २६० ) अर्यमादेवैः ( २१८ ) मावात् ॥ ७ ॥

---

1. वरूथ्यः घ.
2. तीकेतवः क. ख न.
3. नापात्रवे घ.

## ९८२. [1]उत्रुयुक् प्रथमि ॥ ८ ॥

पर्वान्तयुक्तं प्रथम्या भवति। विशाइवा॒ऽ२३इशे ( १.१.२६ ) निष्क्रामाऽ२३इते ( १०.१.२० ) मानाआऽ२३इन्द्रा ( ७.१.२७ ) होइ- इयाऽ२३इनोऽ३ ( १३.१.२५ ) इन्द्राऽ२होऽ१इ-वाऽ२इश्वा ( १२.१.२६ ) नप्रमिना-ताऽ२इसांङ्गिराम् ( १६.२.१६ ) जरमाणाऽ२३म् ( १०.१.१५ ) भयमानाऽ२३:[2] ( ९.१.४ ) [3]सखायआनिषीदत ( ५६८ ) उतद्विपादीनि। प्रथमीति ? अग्नेविभान् ( ३९ ) पर्वान्तयुक्तमिति ? पतिः काव्यादीनि। उत्रुयुक् प्रथमि ॥ ८ ॥

## ९८३. गेस्त्रि[4] ॥ ९ ॥

गेः परं त्रिमात्रं[5] स्वार्या भवति। निहोतामत्सिबर्हाऽ२३इपी-बर्हाऽ२- इपाऽ२३४० ( १.१.२ ) अयआदाऽ२इ ( १.२.७ ) पवस्वदाऽ२इ ( १७. १.२४ ) नाशुश्माऽ२३इपाऽ३४३म् ( १.२.२४ ) ऋताःऋवाऽ२इः ( २. १.२ ) कविः[6] ( ९० ) मोमस्तु ( ३५१ ) यद्धश्मि ( ३९१ ) [7]यानवे ( २७९ ) अग्नायेऽ३ ( १.१.११ ) अमायेऽ३ः ( १.१.२० ) प्रभृ- तीनि। मोमोमरू ( ४२० ) कृष्णामु ( ५९५ ) निवृत्तानि। शुद्धश्शुद्धे

---

1. वडु ह.
2. इतः परं नयमाना इत्यधिकः पाठः घ.
3. सास्रायाआ क. घ. निर्षीदत क, ख. ग. घ. ङ. न.
4. त्रिः मै. पा
5. त्रिमात्रः ग.
6. अनुदाहरणमेतत्
7. यानया ग.

( ९.२.८. ) प्रदाइविये ( २.१.२५ ) आदिद्वन्द्वे[1] ( ८.१.५ ) पृथिऽइव्याः (२.१.३९ ) निपीऽइदा ( १५.१.३०,३२ ) इन्द्रीऽइयाःह्याः ( १५. १.२७ ) वस्वोः ( ४०९ ) अस्मिन् ( स्तोमः आ. ५.१.१८ ) लोकसाम्नि ( आ. ५.१.२१ ) स्वरपञ्चमे ( आ. ३.२.१३ ) जिनी ( ५३९ ) नदी ( २६७ ) वाजे ( २२७ ) चर्मे ( १८२ ) ग्वने ( ३५२ ) निरींरमन् ( २८४ ) मुनीऽइ-नाऽ३१उवाऽ२३ ( ७.२.२० ) इन्दोऽ२स-हाउवाऽ२३ ( १६.१.२७ ) गेत्रि ॥ ९ ॥

## ९८४. चतुक्षि चदा ॥ १० ॥

चतुक्षिण्याश्चदाया आ भवति। इन्द्रमर्च ( १६८ ) वृषाह्युग्र ( २६३ ) भूतिन्नमरामतिभिः ( ५७३ ) निवृत्तानि । नायंक्रमीऽ२त् ( १.२.१५ ) आदाऽ१ग्नुपेऽ२ ( १.२.३४,३५ ) तामाऽ१हुवेऽ२ ( २.१.८ ) यादंजिभीऽ२ः ( २.१.२६ ) द्रकेशिभिः ( २६४ ) भाप्यम् । सुताइमे ( ५६६ ) चदक्षसे ( ३५ ) वृद्धाद्विशेपः । चतुक्षि चदा ॥ १० ॥

॥ इत्यष्टमो दशकः ॥

---

## ९८५. णि ॥ १ ॥

[2]णकारिण्यां चदाया आ भवति। यवज्जिणे ( २८५ ) नृण्णे

---

1. इतः परं आयती त्र्यधिकः पाठः ड. 2. णकारिण्याः ग. ड.

( स्तोमः आ. ५.१.१९ १ ) लोकमाग्नि ( आ. ५.१.२१ १ ) णि ॥ १ ॥

## ९८६. प्रह्वा उस्थिनोः ॥ २ ॥

प्रहूयसाया उस्थिनोरक्षरयोरा भवति । हराऽ२इवाऽ२३४न्त्स्व ( ६.१.१८ ) आइन्मूर्णाऽ२३४याः ( ८.१.२३ ) भूर्णाओऽ२३४वा ( ८.१.२८,) द्वाइपाओऽ२३४वा ( ४.१.१४ ) शाइशाओऽ२३४वा ( १७.१.१५ ) निवृत्तानि । जान्तवेऽ२दाऽ२३४साम् ( १.२.१६ ) वीदागाऽ२३४धाम् ( १.२.३६ ) मेधामाऽ२३४शा[1] ( ३.१.२० ) तीकेताऽ२३४वाः ( १.२.१६ ) धीवर्हाऽ२३४इषो[2] ( ४.२.३० ) [3]क्तूईऽ२न्द्राऽ२३४याम् ( ९.२.३ ) हवीऽ२ष्कऽ२३४र्ताः ( १.१.२३,२.१.१२ ) सुरेऽ२माऽ२३४याः ( ७.१.१४ ) भुद्देजा ( ५६६ ) प्रहूयसाया इति १ महाइत्राऽ२३४इणाम् ( ५.२.१७ ) अभाऽ२इवाऽ२३४णीः ( १७.१.३५ ) घर्मतन्वोः ( आ. २.२.१४,१६ ) प्रह्वा उस्थिनोः ॥ २ ॥

## ९८७. वौ ॥ ३ ॥

वौ च प्रत्यये उस्थिनोरक्षयोरा भवति । एवंश्च ( ३६४ ) अह्ये ( ४३९ ) निवृत्तानि । उपातेजा ( ४६७ ) अध्वर्योऽ२३४आ ( १४.१.५ ) आश्वयेऽ२३४वा ( १४.२.२६ ) वन्दाध्याऽ२३४हाइ ( १.१.३० ) [4]वृद्धा-

---

1. इतः परं तांधेनाऽ२३४याः (१३.१.१०) अधिकः पाठः ह.
2. इषु ह.
3. आइन्द्रायाम् य. त्र. ग. घ. ह.
4. अवृद्धात् घ.

द्विशेपः ॥ चौ ॥ ३ ॥

## ९८८. इण् ॥ ४ ॥

२१ २ २१
[1]पदादिरा भवति। इममाऽ२३४इन्द्रा ( ९.१.२४ ) वयमाऽ२३४-
२ २१र २ १र
इन्द्रा ( ४.१.६ ) इवापाऽ२३४५इवाऽ६५६ ( ४ २.३२ ) उत्सोदाऽ२३४-
२ २११ २
इवाः ( १४.१.२९ ) तोदास्याऽ२३४इवा ( ३.१.१० ) वृद्धाद्विशेपः ॥

इण् ॥ ४ ॥

## ९८९. ऊता ॥ ५ ॥

उत्तायाश्चा भवति। [2]परमेजनित्रे ( ६५ ) मनसेदृणु ( ६९ )
योनिष्टे ( ३१४ ) जगृह्णा ( ३१७ ) दशभिः ( ३२३ ) निधुंदद्रा ( ३२५ )
मघरावे ( ३३३ ) वाजयन्ते ( ३३७ ) रशनाभिः ( ५२३ ) मत्सरः
(५३२) प्रसेनानीः (५३३) स्ये युनजते (आ १ २.१. आदिषु) उता ॥ ५ ॥

## ९९०. उन्ताक्ष्णोः ॥ ६ ॥

उलिङ्गायामृचि द्वयमन्ताक्षरिणोः[4] प्रत्यययोरा भवति। सुक्षत (८०)
२ १ २ २
होऽ३अभि-आऽ३४३इ ( १५.१.३६ ) कलशम् ( ४३५ ) निवृत्तानि। स्माऽ३-
१ २
निध येऽ३४३ ( ८.२.१३ ) त्रसथात् ( ३२४ ) महतेध ( ५३५ )

उन्ताक्ष्णोः ॥ ६ ॥

---

1. इणः पदादिः क. ख ग. घ.
2. परमेवसे क. पवस्ते वृणु ग. सदाहरणमेतत् ङ. च.
3. उत्ताक्ष्णोः क. ख. ग. घ. ङ. उर्ताक्ष्णोः मै. म्
4. अन्धाक्षरिणोः क. ख. घ.

## ९९१. ताक्षादिभ्यः ॥ ७ ॥

अन्ताक्षराद्द्वैधमुकारादिभ्यः परमा भवति। अपूर्व्या ( ३२२ ) धियस्त्वरे ( ४३९ ) तिदाशुपे ( ५८७ ) निवृत्तानि। असावि ( ३१३ ) सुरुचः ( ३२१ ) अजहुः ( ३२४ ) [1]इन्द्रायगि ( ३३९ ) [2]तःपवि ( ५२६ ) तक्षादिभ्यः ॥ ७ ॥

## ९९२. दा उनु[3] ॥ ८ ॥

[4]दौप्रत्यये पर्वान्त आ भवति। [5]मातराऽ१वनु० ( २.१.३५ ) त्वादादि ( ९७ ) द्विपाचतुः ( ३६७ ) युवतिभिः ( ५५७ ) निवृत्तानि। इममीऽ२३ ( ९.१.२७ ) दूरादि ( ७१९ ) मगुन्वे ( ५८२ ) विश्वाद्वेपाऽ्मितरतीऽ२३० ( १२.१.३४ ) यद्वाघत्रीऽ३० ( १०.२.४ ) नियामंचीऽ३० ( ४.१.१५ ) [6]पतेदिदीहिदेऽ३० ( १७.२.६ ) बुऽ३हात्-देवेऽ३-पूऽ३ ( १६.२.९ ) मयमानः ( ३३४ ) वृद्धाद्विशेषः। दा उनु ॥ ८ ॥

## ९९३. उयसु ॥ ९ ॥

द्वितीयस्वरमसुलिङ्गायामा भवति। तदावृणी ( १३८ ) वृपाहरिः ( ४९७ ) आदिद्वन्द्वे ( २८८ ) असुलिङ्गायाम् ? सुदुघामीऽ३ ( ४.२.३६ )

---

1. इन्द्रोयगि. ङ.
2. सुतः पवि ङ.
3. उडु ङ.
4. दाप्रत्यये क. ग. घ.
5. मः-तराऽ१ऽम्युन्नुग. ग.
6. पत्रते क. ग.

२ ३१ २ २ १२ २ २ २ १
सुतासोये॑ऽ२ ( ६.१.४ ) गोपतीऽ३म् ( ८.२.७,८,१०,११ ) हृणीऽ३था-
अ २
अतिथीऽ३म् ( ३.१.३४ ) पर्यन्त इत्यधिकारः । सुताइमे इति ( ५६६ ) मेशब्दस्य ॥ ज्यसु ॥ ९ ॥

## ९९४. दोश्चिक्रः ॥ १० ॥

२१
दोः परश्चिक्र आ भवति । [1]वोअग्नयाऽ३इ ( १.२.२२ ) आयाहि ।
१ २ २
मारुत्वताऽ३इ ( १२.२.२५ ) चमिन्वसाऽ३इ ( १५.१.६ ) [2]अचिक्रदायाम् (४९७) निवृत्तानि । नतत्तेअग्नेऽ२ (२.१.२०) त्वंवृत्राणीऽ३० ( ६.२.३१)
२१ २ २ २ २ २ २
ईरतेऽ३ (१६.१.६) यद्वाघत्रीऽ३० (१०.२.४) प्रभृतीनि । दोश्चिक्रः ॥१०॥

॥ इति नवमो दशकः ॥

---

## ९९५. डौ ॥ १ ॥

१ २
तृतीये प्रत्यय आ भवति । शग्ध्यूप्वाये ( ७.१.१० ) यपातनाइ-
१ २
ह्नूऽ२३४ताः ( १२.२.२१ ) अरिष्टे–पिविश्वतः ( आ. १.१.११,१२ ) पतिरित्यादित्यव्रते ( आ. ६.२.१ ) डौ ॥ १ ॥

## ९९६. [3]डेरी ॥ २ ॥

२ ३१ २ २
डेः पर ईकार आ भवति । ज्योतींषि ( ९८ ) विपाञ्ज्योताइ

---

1. वो अग्न आयाहि ग.
2. अचिक्रदायामिति ग. ङ. न.
3. डेरि ग.

(३.१.१४) सर्ईरत्ते (२५१) निवृत्तानि । वागीताऽ२३४याइ ( १४.२.२० ) अज्ञीजाऽ२३४नात् ( १३.२.१४ ) [1]दसोउमे स्ये ( आ १.२.८ ) शतीरुद्य ( ५४४ ) कईऽ२४३म्वियक्ताः ( ११.२ २६ ) घूम्नीऽ२४३सुवारः ( ११. २.३१ ) तृतीये साम्नि स्तोत्रम्योवेत्यधिकारः । महाइन्नाऽ२३४इणाम् ( ५. २ १७ ) अचाइक्काऽ२३४दात् ( १६.२ १३ ) यदाइयाऽ२३४यूम् ( १७. २ ७ ) डेरी ॥ २ ॥

## ९९७. वि[2] ॥ ३ ॥

वा शब्दे ना भवति । अग्नेरावः ( ५ ७ ) रयिंराजो ( १९९ ) चदेना. (४५२) एवाहिनीरः ( ३८५ ) न द्वितीय इत्यधिकारः ॥ वि ॥३॥

## ९९८. वाराया ष्टुभि ॥ ४ ॥

वारायाः ष्टुम्या भवति । व्रजेभजा ( ३१८ ) प्रसोमहे ( ३२८ ) अन्वये । निवृत्तानि । [3]ईयान कृष्णः ( ३२३ ) निवेराऽ२३४या॰ (१० १.७) नेन्द्रामाऽ२३४श्रा ( ८.१ २१ ) [4]आनेदाऽ२३४क्षाम् ( १४ १.३ ) दिवेदिवे ( ५१६ ) द्रकेगिभि॰ ( २६४ ) वाराया ष्टुभि ॥ ४ ॥

## ९९९. इ ॥ ५ ॥

इकारश्चा भवति । विश्वाअप[5] (४७९) गिरस्तोमा (२५१) इ ॥५॥

---

1 दासी उमे घ
2 "व" इति युक्त सू-म्
3 इयान ग
4 आनेदा ग
5 विश्वे अप ड.

## १०००. वेस्ति ॥ ६ ॥

[1]मन्द्रात्परायास्तिलिङ्गायामा[2] भवति । माराइ्या२३४मा ( २. १.३८ ) सिदाशु (३००) अश्वये (५१५ १) रिचम्वोः (५१३) स्ये-यच्छक्रा (आ.३.१.१) निवृत्तानि । विदयते (३८९) विचर्पणिः ( ४८८ ) मिप्रथमा ( ३७१ ) हिरण्यपाणिः ( ४६४ ) योनिमृत ( ५११ ) णिपवते ( ५५४ ) वेस्ति ॥ ६ ॥

## १००१. वादेः ॥ ७ ॥

वादेश्चा भवति । परिस्रानः (४७५) उत्सोदेवः (५११) वादेः ॥७॥

## १००२. [3]पि ॥ ८ ॥

[4]पकारे प्रत्यये आ भवति । ऋजीषी (२४८) मदेषु (४७५) पि ॥८॥

## १००३. ऋ ॥ ९ ॥

ऋकारश्च पकारे आ भवति । सावार्षा२१वा२३ ( ३.२.१० ) का२३र्ष्णाम् ( १३.२.२७ ) वार्षाहरा२३इ ( १४.१.१ ) ऋ ॥ ९ ॥

## १००४. स्पर्शे ॥ १० ॥

स्पर्शे प्रत्यय आ भवति[5] । सार्प्रा२कारा२ ( ६.१.९ ) इत्या-

1. मन्द्रात् घ. न.
2. लिङ्गाया आ भवति क. ख. घ.
3. पि. ग.
4. वकारे ग.
5. इतः परं सर्वेषु कोशेषु

दीनि । स्पर्शे ॥ १० ॥

॥ इति दशमो दशकः ॥

इति सामतन्त्रभाष्ये[1] दशमः प्रपाठकः ॥

---

॥ अथैकादशः प्रपाठकः ॥

## १००५. त्यन्गि ॥ १ ॥

गत्यन्ते पर्वणि [2]गिस्वरमा भवति । दाऽ२३४औहाइ ( १.२.१६ ) गार्हपताऽ२इ ( १.२.३२ ) गत्यन्ते ? वृहाऽ३० ( ३.१.१ ) न जागृविः ( ५१४ ) गिस्वरम् ? वृऽ५होऽ६हाइ (५.१.३५,१३.२.१५) त्यन्गि ॥१॥

## १००६. भ्यण् ॥ २ ॥

भिप्रत्यये ऽणलिङ्गायामा भवति । तमाऽ२भ्वंसाऽ२३म् (६.२.२०) याःगद्युम प्युगाऽ२भ्र्णाऽ४ताऽ६५६इ[3] ( १६.२.३२ ) अन्यत् । संगृऽ२- भाया ( ५.१.१६ ) योजाऽ२३४रितृ ( ६.१.३० ) नृभीः[4] ( ११.१.१९ )

---

दाऽ२३४औहाइ ( १.२ १६ ) इति पाठः समुपलभ्यते । स च सूत्रासंगतः । दगे इत्यत्र दोकारस्याप्यर्शत्वात् । मन्ये लेखकेनापरिलनमूलोदाहरण भ्रान्त्या लिखितमिति ।

1. सामतन्त्रे क. ख. ग. घ.
2. गि प्रथमिस्वर क. ख. घ.
3. ताइ ग. म
4. नृभिः क. ख. ग. घ.

ऋहानूभी३४ः ( ११.१.२० ) इपऽस्तोतृम्याऽ३आ ( ११.२.२ ) नाम-नुमादीऽ३योनूमाऽ३ ( १६.२.१९ ) म्यण् ॥ २ ॥

## १००७. न शु ॥ ३ ॥

न शुलिङ्गायामा भवति । तिनूमाऽ२३४णाः ( ८.२.१८ ) एमा-त्पृथीऽ२३४ची ( १०.१.७ ) ओहतुऽ२३४म्पात् ( १२.१.२७ ) शुलिङ्गा-याम् । निधार्ताऽ२३४वा ( १६.२.२८ ) योनीमाऽ२३४र्ता ( १४.१.३४ ) न शु ॥ ३ ॥

## १००८. हृत् ॥ ४ ॥

हल्लिङ्गायां ना भवति । न भूगवः ( ५५३ ) द्विः । [1]यज्ञायाम् ( ६०१ ) हृत् ॥ ४ ॥

## १००९. त्र्यचु ॥ ५ ॥

त्र्यायक्षरमा भवति । स्माडन्नुरु० ( ७.१.२५ ) धाइराऽ३४० ( १६.२.३० ) निधनानि । एऽ५न्दुमि ( १०.२.७ ) तेऽ४पाम् ( ६.१.४ ) [2]ईऽ४यइया ( ९.१.२ ) कण्ठ्ये विशेषः । त्र्यचु ॥ ५ ॥

## १०१०. यि ॥ ६ ॥

तृतीयो प्रत्युत्क्रम आ भवति । भिणाऽ२३४उमीः[3] ( २.२.१७ )

---

1. यज्ञायज्ञायाम. ङ.
2. इयइय ग.
3. इतः परं त्मोऽभिः इत्यधिकः पाठः ग. घ.

१ २ ५ १ २ ५
नव्याऽ२म्याऽ२३४ईर्मीः ( ४.१.३१,३२,३३ ) इन्द्राऽ२याऽ२३४इन्दो ( १७.१.१० ) यि ॥ ६ ॥

## १०११. गिनो जेः ॥ ७ ॥

प्रथमिनः पर्वणो द्वैधं जेः परमा भवति । इव प्रियम् ( ५ ) गृणन्ति ( ११ ) सुवृक्तिभिः ( २७४ ) दीदिहाऽ२३४इदे् ( १७.२.७ ) जेः परम् ? यदिये्ऽ२३४हा ( १२.१.१८ ) गिनो जेः ॥ ७ ॥

## १०१२. ण्यमि ॥ ८ ॥

[1]अपरणकारे परे आ भवति । न्यत्रिणम् ( २२ ) महित्रीणायाम् (१९२) [2]अमिति ? गायात्रीऽ२३४णाः ( ९.१.१५ ) नऊऽ३२र्मीऽ२३४णा ( १७.१.३० ) ण्यमि ॥ ८ ॥

## १०१३. तृतीये तौ ॥ ९ ॥

वर्गतृतीये वर्णे प्रत्यये द्वैधं [3]यथर्च एवा भवति । [4]तावस्वाऽ२३४इदा ( ३.१.९ ) इन्द्रोमुनीनाम् ( २७५ ) निवृत्तानि । विपाञ्ज्योताइ-पीऽ२३४षी ( ३.१.१४ ) ग्रचाइपताइ-ईऽ२३४न्द्राः ( ७.१.१० ) वसू-चीऽ२३४दाम् ( ७.१.१० ) याहोइ-ईऽ२३४न्द्रा ( ७.१.१३ ) वमृत्विजम् ( ६०५ ) स्थे (आ.४.२.१३) तिग्मेन (२२) प्रभृतीनि । द्वितीयादित्यधिकारः । प्रथमिनो

---

1. णि प्रत्यये क. ख. ग. ङ.
2. आमीति ख. ग.
3. यद्व एव. घ.
4. तत्रस्विदे ग.

२१२ ३२ ३ ४
विशेषः । वर्गतृतीय इति ? प्राणा हाहोइ शाऽ२३४इशूः ( १७.१.२३ )
२ ३ ४
युगदिन्द्रकेशिभिः ( २६४ ) पुरोहितम् ( ६०५ ) नाशोचाऽ२३४इपा ( १.
२ ३ ४
२.५ ) नेमाधाऽ२३४इता ( ८.२.१२ ) अपूर्व्यं ( ६०१ ) उतोदिवम्
( ६०१ ) तृतीये तौ ॥ ९ ॥

## १०१४. न वि दायां ता मात् ॥ १० ॥

[1]नविनिपादे आन्तायामृचि द्वैधं यथर्च एवा भवति तालिङ्गाया-
मृचि मकाराद्यान्त्ये । [2]द्रिवः ( ३७१ ) [3]चारूणि ( ५६० ) इन्द्रं नरः
( ३१८ ) अन्वये । अरिष्टनेमिम् ( ३३२ ) प्रमन्दिने ( ३८० ) मूर्धानंदि
( ६७ ) रथंविप्न ( ५५४ ) [4]ति संगिरम् ( ५५७ ) [5]न निदायां पूर्वे ।
गर्भिणीभिः ( ७९ ) द्वितीयादित्यधिकारः । न नि दायां ता मात् ॥ १० ॥

॥ इति प्रथमो दशकः ॥

---

## १०१५. उदि घोषि ॥ १ ॥

उदात्ते प्रत्यये द्वैधं घोष्या भवति । दानम् ( ३०० ) उत्सोदे
( ५११ ) [6]महित्री ( १९२ ) नोहात्रां ना ( ? ) गिरिष्ठाः ( ४७५ )
निवृत्तानि । ऋजीषी ( २४८ ) पवित्रे सो ( ४७५ ) द्विः । [7]मन्द्रया याति

---

1. नविनपादे ग.
2. दिवः ग ङ.
3. चारांणि. ङ
4. तसंगिराम् क. ग.
5. ननिदाशयम् ग.
6. न महित्री ग.
7. मन्दा याति घ, ग, ङ.

२ ३ ४
( ५१५ ) तन्वन्ति पौं ( ५५१ ) ताइँऽ२३४माइ ( १७.१.५ ) उदात्ते ?
सैनम् ( ४५७ ) उदि घोपि ॥ १ ॥

## १०१६. ण्णे शणचु ॥ २ ॥

ण्णोलिङ्गायामृचि शकारणकाराद्यक्षरमा भवति । सम्मील्येपु ( आ.२.१.२६ ) नियतं च निवृत्तं च । ण्णो शणत्तु ॥ २ ॥

## १०१७. गीताद्ये नन्दायाम् ॥ ३ ॥

गीताद्ये प्रत्यये द्वैधं नन्दायामा भवति । स्ये त्वामिद्धि ( २३४-आ.२ १.२२ ) अहमहिम् ( ६१२ ) निवृत्तानि । त्वन्नऊत्तीऽ२ ( ७.१.२७ ) द्वादशे परीतायाम् (१४.२.१२) ऐहीयैहीऽ१ (४.२.३४) प्रभृतीनि । वोवीऽ२-दद्दसाउ (९.१.३१) वीवीऽ२-ह्वयामाऽ२३हाऽ३४३इ (२.१.२६) असिशब्दो महिशब्दो दिविशब्द इतिशब्द उविशब्दः । गीताद्य इति ? विशाइवाऽ२३-इशे (१.१.२६) ऐऽ२होऽ१आ२३इही (४.१.२६) गीताद्ये नन्दायाम् ॥ ३ ॥

## १०१८. दिवा गौ ॥ ४ ॥

दिवानक्तस्य द्वैधं [1]प्रथमेऽद्वादा भवति । वृणीमहादीनि । आर्ता-वसाउ ( ७.१.१६ ) त्रिवरूथम् ( २६६ ) यसेनृभिः ( २७९ ) धर्तादिवः ( ५५८ ) अन्वये । निवृत्तानि । रंपृथिवीम् ( ५१ ) मर्तो यस्ते ( ५८ )

1. प्रथमावृद्धादा ख.

नो अर्पमि ( ५११ ) स्यमीदमि ( ५११ ) दिवा गाँ ॥ ४ ॥

## १०१९. न सार्वायाः श ॥ ५ ॥

न मार्गायाः शलिङ्गायामा भवति । [1]सुनीतीतू२ ( ३.२.२८ ) तेजा२ ( १२.२.१० ) उशनेमा५ ( १५.१.३३,३४ ) [2]देवोदेवा२ ( १५.१.३३,३४ ) अलिङ्गायाम् ? दाडरो२-ढिरा३४५ ( १४.१.२८ ) एवाहिवी ( ३८५ ) न मार्गायाः श ॥ ५ ॥

## १०२०. सुस्थिनि ॥ ६ ॥

[3]मक्रत्कादिन्युस्थिनो ना भवतीकारः । द्वितीयादित्यधिकारः । सुनीरिया३१उवा२३ ( ५.१.३० ) तुविग्रीवो२ ( ४.१.२६ ) अमीनोवा ( ५४९ ) ऊ२ती ( ९.२.२६ ) यो२टी ( १६ १.१२ ) द्वितीयात् ? शतं यस्य ( ३७७ ) सोमः पवते ( ५२७ ) [4]गक्रत्कादिनीति ? चन्द्रमान्ये ( ११.१.३४ ) उस्थिनीति ? स्तोमस्पर्शी ( १०६ ) सुस्थिनि ॥ ६ ॥

## १०२१. वे ॥ ७ ॥

वेदान्दस्य ना भवति । कण्वेषु ( २५२ ) न्वेयोवसु ( ५८० ) याचो प्रतावे ( आ. ४.१.१ ) वे ॥ ७ ॥

---

1. सुनीतीषु. ग.
2. देवो ष. न.
3. सुस्थि ष. म.
4. सक्रत्कादिनीति. क.

## १०२२. कम्[1] ॥ ८ ॥

कंशब्दे च ना भवति । इदन्तएकम् (६५) स्ये । असाविदेवायाम् (आ. ३.१.३० ) कम् ॥ ८ ॥

## १०२३. वी ॥ ९ ॥

[2]वीशब्दस्य ना भवति । वन्दद्वीरा ( ९.२.२२ ) [3]तमश्हविः ( ५१२ ) तत्पृथिवीम् ( ६०१ ) वी ॥ ९ ॥

## १०२४. यमन्धाया३सलि ॥ १० ॥

[4]दीर्घस्यान्धायां द्वैधं सलिङ्ग [5]एव पादे 'आ भवति । देवावीर ( ४७० ) मदेषु ( ४७५ ) निवृत्तानि । नीमसि ( १७६ ) यश्चेयस्मिन् ( ८५ ) दिवःपयतेका ( १६.२.२० ) दक्षोदेवा ( १६.२.२० ) [6]अन्धायाम् ? नमेगाइरा ( ६.२.८ ) वन्दद्वी० ( ९.२.२२ ) दीर्घमित्यधिकारः । यमन्धाया३सलि ॥ १० ॥

॥ इति द्वितीयो दशकः ॥

---

## १०२५. व्युदात्तादेः सन्ध्यम् ॥ १ ॥

यकारे प्रत्यये उदात्तादेः पर्वणः सन्ध्यं ना भवति । एवैश्वा ( ९.

---

1. कम. मै पा.
2. वेशब्दे घ. ङ.
3. तमश्हस्ति. घ.
4. इतः घकोशे चतुर्थदशकस्यश्य सूत्रीयभाष्यगतमानुपाइहोइ- पर्यन्तो नोपलभ्यते ।
5. पाद एव ग.
6. आन्धायाः ग.

२.२६,२७ ) योनौवनेषु ( ५०३ ) वृषादेव ( ५०४ ) उत्सोदेवः ( ५११ ) उदात्तादेः १ दाइवोऽ२-हिराऽ२४५ (१४.१.२८) आइवाऽ१हिवीऽ२ ( १०. २.६ ) व्युदात्तादेः सन्ध्यम् ॥ १ ॥

## १०२६. उदिन्नु[1] ॥ २ ॥

उस्थं द्वैधं पदान्त एवा भवति । इदं वसादीनि । निवृत्तानि । [2]आसोतापा ( १७.२.१०,–१२ ) जीवाज्यो ( २५९ ) वेपम् । त्रिः । [3]पुरुहूतम् ( ३७६ ) उकारोकारौ तु । स्तोभे तु विशेषः । उदिन्नु ॥ २ ॥

## १०२७. प्रिनोः ॥ ३ ॥

प्रिनोरक्षरयोरा भवति । पुपुरिश्र ( ५८६ ) प्रवोचम् ( ६१२ ) नन्दायां ह्रस्व इत्यधिकारः । प्रिनोः ॥ ३ ॥

## १०२८. ओडि[4] ॥ ४ ॥

ओकारो डि प्रत्यये ना भवति । वमोराधा ( १.२.३६ ) वमो-स्तोत्राऽ३म् ( ६.१.२१ ) इन्दोसाहाऽ३१२३४ ( १६.१.२९ ) [5]गोपा-ताउऽ३ ( ११.१.४ ) अध्वर्योऽ२३४आ ( १४.१.५ ) इदंवसादीनामुदुह्रस्य विशेषः । ओडि ॥ ४ ॥

---

1. इडु ड.
2. असोतापा ग. घ.
3. पुरूहूतमुम ग. घ.
4. सर्वेषु कोशेषु डीति वर्तते । गीति यदि भवेत्तर्हि उदाहरणान्यनुकूलानि भवेयुः । डीति तृतीयस्वरस्य संज्ञा । आऽडि ग. घ
5. गोपतड. क ग.

## १०२९. नि ष्ठा[1] ॥ ५ ॥

२ ३१२ ३ १११
निधनस्य द्वैधं ष्ठा आ भवति । ष्ठाऽ३चीप-ताऽ२३४५इ ( १०.२.
२ ३२ ११३ १११
१९ ) भीम ( ३९४ ) वाऽ३इवक्ष ( ११.१.१२ ) अन्यत् । मातेऽ२३४५

( ३.२.२२ ) तात । द्युभिः ( ३८४ ) अभिभूरसि ( आ. २.१.१६ )
१ ३ १११ १२ ३ १११ १ ३ १११
श्रवसेऽ२३४५ ( ७.१.२२ ) वोमहेऽ२३४५ ( ६.१.३३ ) धर्मणेऽ२३४५

१ १११ २ १ १११
( १०.१.११ ) क्रिनेऽ२३४५ ( ३.२.१ ) वर्हीऽ३षीऽ२३४५ ( १.१.२ )
२ १ १११ २ १ १११
धनाऽ३चींऽ२३४५म् ( २.२.११ ) मंहिऽ३ष्ठाऽ२३४५म् ( ४.१.३४ )
२ १ १११ २ १ १११
ससाऽ३मेऽ२३४५ ( १.१.३२ ) दमीऽ३रेऽ२३४५ ( ११.१.११ )
२ १ १११ ३२वि.२ १ २१२ ३ १११
सवीऽ३इंऽ२३४५ ( ४.२.३५ ) धाराऽ२ऋतस्पसादनेऽ२३४५ ( ९.१.२४ )
१वि.२ ३ १११
घ्नेऽ२नराऽ२३४५ः ( ९.२.११ ) नि ष्ठा ॥ ५ ॥

## १०३०. वाच्छादिभ्यः ॥ ६ ॥

वाशब्दात्परस्य[2] द्वैधं छादिभ्यः परमा भवति । भूत्वस्मै ( ७६ )

रशनाभिः ( ५२३ ) वाचो व्रतद्वितीये ( आ. ४.१.२ ) निघ्नानि ।
२१ २ १११ १ ब
उपसाऽ२३मछाउ-वाऽ३-चीऽ२३४५ ( २.२.४,५ ) दाइमाऽ३२उवाऽ३-
१११ १ २ २ १११
देऽ२३४५ः ( ३.२.५ ) अत्योनवाऽ२३-हाउवाऽ३-जीऽ२३४५ ( १५.२.
४२ ५२४५ ५ ३ १११ १ ३
२४ ) क्षेअत्योनवाऽ६ए-[3]हाउवा-जीऽ२३४५ ( १५.२.२५ ) याऽ२राऽ२३४

1. नि ष्ठाः क. ग.
2. परं दा. घ.
3. ए. ग. न,

२र २ १ १११ १ २ २र २ १ १११
औहोवा-तीऽ२३४५म् ( १५.२.२९ ) स्वाऽ२[1]धाऽ२३४औहोवा-मीऽ२३४५ः

( १५.२.१२,१३ ) वाच्छादिस्वः ॥ ६ ॥

## १०३१. रात् ॥ ७ ॥

२ १११
रशब्दाच्च परमा भवति । रन्ताऽ३याऽ२३४५ ( ४.२.२६ )

२ १ —
रथाइनाऽ२म् ( ९.१.१७ ) रात् ॥ ७ ॥

## १०३२. पूष्णा ॥ ८ ॥

१ ३ २ २र२
पूष्णायाश्च भवति । आऽ२३ हियाऽ३४औहोवा ( ४.१.२८ ) अति-

स्त्रिधः ( १०० ) रशब्दस्य तु विशेषः ॥ पूष्णा ॥ ८ ॥

## १०३३. ओष्ठ्ये रि ॥ ९ ॥

ओष्ठ्ये प्रत्यये द्वैधं रिशब्द एवा भवति । उपनोहरिभिः ( १५० )

१ २
त्वादातमद्रिवः ( ३४५ ) ओष्ठ्य इति ? रीऽ२३४याम् ( ३.१.६;

१४.१.९ ) ओष्ठ्ये रि ॥ ९ ॥

## १०३४. नन्दा ॥ १० ॥

२ १ १११ २
नन्दायाश्च भवति । तयाऽ३ईऽ२३४५ ( १०.१.१६ ) ड्रिनऽ३-

१ १११ २ १ १११
ईऽ२३४५ ( १०. १.६ ) श्रवाऽ३माऽ२३४५इ ( ७.२.१६ ) महादिवा-

कीर्त्ये ( आ.६.१.९. ) पुरीषपदेषु च ( महा ४ ) नन्दा ॥ १० ॥

---

1. या औहोवा-न्तीः क. ग.

## १०३५ ह्रस्वे ॥ ११ ॥

ह्रस्वे प्रत्यये आ भवति । आगहियेहिताइमेऽ१ ( ५ २.१५ ) वा साउ-उभया० ( ९ १.२८ ) ह्रस्वे ॥ ११ ॥

## १०३६ इणः स्वारिणि ॥ १२ ॥

¹पदादेः पर स्वारिणि गीते आ भवति । यज्ञाइपुस्तीर्णबर्हिषाऽ२३४५-म् ( ११.२.३ ) व्रतान्त्ये ( आ ५.२.२२ ) स्वारिणीति ? स्तुषेऽ१ ( ७.२. ३३ ) भाष्यम् । स्तौषेऽ३४५ ( ६.१ २५;१२.२.१३ ) हविष्कृतेऽ२३४ ५ ( ४.१.२० ) ²वृत्ल्यम् ( ११२ ) गीतादेरित्यधिकारः । पदादेः ? मातेऽ-२३४५ ( ३ २.२२ ) इणः स्वारिणि ॥ १२ ॥

## १०३७ एहिगडिनः ॥ १३ ॥

एहिष्यक्षरस्य द्वैधमडिनः परेणः आ भवति । एहियाऽ२इ हियाऽ३४ ओहोवा ( ४.२ १ ) आइहिया ( आ ४.२.२० ) रौहिणे च । निवृत्तानि । अग्निः एहियाऽ६हा ( २ २ १७ ) दहएऽ३४ हियाऽ६हा ( ३.१.२५ ) मिऽ३त्राया एऽ२३४हिया (११.२.१४) एहिया एहियाऽ३४ ( १६.२.३३ ) द्विः । अडिन इति ? आऽ२डहियाऽ२३४हाइ ( ६.२.२६ ) आऽ२इ-हिमाऽ२३४हाः ( ७ १.१२ ) त्र्यक्षरस्येति ? स्यमन्मभिः ( ८७ ) मन्युं

---

1. पादादे ग

2. ऽळ्यम् क रा

जनस्य दूढ्यम् ( ११३ ) स्ये । आइही ( आ.१.२.२० ) आइहीऽ२ ( ४.२.८ ) एहिगंडिनः ॥ १३ ॥

॥ इत्याभावः ॥

॥ इति तृतीयो दशकः ॥

---

## १०३८. अनित्ये रतः ॥ १ ॥

अनित्ये प्रत्यये परतो भवति । अक्षरान्त इत्यधिकारः । [1]धस्तन्नोविदा-हाऽ३-वा-साउ ( ९.१.२८ ) सुवा-हो-विद० ( १७.१.४ ) तंगूर्धयास्वौहोर्णराम् ( ३.१.३३ ) [2]धनाउवाऽ३-णीऽ२३४जे ( १६.१.३७ ) स्याऽ२गाऽ२३४औहोवा-नाऽ२३४णाः[3] ( ५.१.१० ) स्याऽ२साऽ२३४औहोवापतीऽ२मेऽ२३४५[4] ( ५.१.२० ) स्यसोवा-पा५तोऽ६हाइ[5] ( ५.१.२२ ) वाजानाऽ२साऽ२-ऊऽ२-हाऽ२-ऊऽ२-पतिंपाऽ२३तीऽ२३४३म्[6] ( ९.१.१९ ) शुचयोवीऽ३पा-हिम्ऽ३स्थिहिम्-चाऽ२३४इताः ( ७.१.२ ) यःकाऽ३औऽ२-३४वा-प्णाम० ( १०.१.२३ ) आवीरंपाऽ३हाऽ३-ताऽ२ना० ( ११.१.७ ) अधाऽ२होऽ१-एाऽ२३न्धृ[7]ऽ३४ ( ६.२.२१ ) दिवःपवतेका-औहोऽ३हाऽ३-हा-त्वियोरसो ( १६.२.२० ) अयारुचायाम् ( आ. २.१.२० ) महा-

---

1. यस्तन्नः ड.
2. धनाउवा क.
3. वानाः ग. यंणाः ख.
4. प्तनीमे ख.
5. स्पातो हाइ ख.
6. स्पातीम ख.
7. र्शन्धृ ख.

नाम्नीषु। [1]सयादीनि। अक्षरान्त इति ? सःस्वेसा० ( १७.२.२४ ) प–र्ये० (१४.२.४) रंव्यौं० ( ८.१.७ ) तृंपा०[2] ( ५.१.२ ) विश्वतोदा[3] ( ४३७ ) पुरोजिती ( ५४५ ) सन्ध्यम्। अनित्ये रतः ॥ १ ॥

## १०३९. ग्वि ॥ २ ॥

त्र्यक्षरे पर्वणि तालव्यं परतो भवति। सयाऽ२३हाऽ३४३ई ( १.१.१४ ) [4]पिशाऽ२हो-ग० ( १५.१.१३ ) या इन्द्रेण स्ये ( आ.३.१.२० ) निवृत्तानि। वृहाऽ९२३द्धोइ ( २.२.३० ) स्तोताऽ२३उवाऽ२ ( ६.१.५ ) सुवराऽ३४ (१७.१.२) योनइदमिदम् स्ये (आ. २.१.१५) स्वर्वान् (२५४) परस्वात्। ग्वि ॥ २ ॥

## १०४०. व्रुणश्चरायां वाचि ॥ ३ ॥

व्रुणो द्वैधं वाचि नीचपरायां परतो भवति। अक्षरान्त इत्यधिकारः। यहाऽ३२उवाऽ२-[5]पाऽ२३४तीम् ( ३.१.१ ) मुनीऽ२-नाऽ३१उवाऽ२३-[6]ताऽ२३४खा ( ७.२.२० ) ऊर्मिरपाऽ३१उवाऽ२३-ईऽ२३४वा[7] ( १७.२.३२ ) शंमध्यमाऽ३१उवाऽ२३-[8]यूऽ२३४वा ( १७.२.७ ) [9]तमाऽ३१उवाऽ२३–हाऽ२३४वीः ( १४.२.१ ) विशाऽ३१उवाऽ२३–[10]हाऽ२३४रीः

1. स्वादीनि क.
2. त्रम्पा क. ख. ग. न.
3. विश्वातो दि ग.
4. विशाऽ२हो. क.
5. स्पाऽ२३४तीम् क. ग.
6. स्ताऽ२३४खा. क. ग.
7. मीऽ२३४वा. क. ग.
8. म्यूऽ२३१वा क. ग.
9. तामरवा क. ग.
10. द्वाऽ२३४रीः क. ग.

(१४.२.१७) नाइमिश्रक्रौवा-ई॒ऽ२३४वा[1] (३.१.५) राथीतमाऽ३१उवाऽ२ रथाइनाऽ२म् (९.१.१७) निवृत्तानि । अग्निरौ० (१.१.७) इन्दुरौ० (१३.२.६) धनूऽ२ः-ओऽ२३४वा (१६.१-३४) त्वंत्वाऽ६मे (२.१.२) इदाऽ६मे (५.१.१०, ६.१.१४) अभिप्रवः (२३५) पाइवेऽ२द्धाइ (५.१.४) [2]ओब्लि । आस्याऽ२हाइ (५.१.४) गोमाऽ२३ह्रोंइ[3] (१३.२.२१) मानुषाऽ२३ह्रोंइ (१३.२.३०) सानीऽ२ह्रोइ (१.२.१३) प्रभृतीनाम् । क्वचित्पदान्तवाचिनीचपरायाम्[4] । बृहात्-बृहा३१उ-वा२ (६.२.१) तरोभिर्वः (२३७) सुराधसम् (२३५) अहन्नहिम् (६१२) वाजयन्तः (८७) सुवीरियाऽ३१उवाऽ२३ (५.१.३२) मानइन्द्र (२६०) [5]प्रथश्चादि । हिते न लोपः । गुणश्वरायां वाचि ॥ ३ ॥

## १०४१. इ ॥ ४ ॥

इकारश्च परतो भवति। वाचि नीचपरायामित्यधिकारः । आनीकयाऽ-३१उवायेऽ३[6] (२.२.३०) गिराऽ३१उवायेऽ२ (१३.१.२१) ग्रामृतयाऽ-३१उवायेऽ२ (४.१.१.) जंचर्षणाऽ२१उवायेऽ२ (१०.१.२२) यः-सुक्षिताऽ३१उवायेऽ३ (१७.२.२४) स्नुहाऽ३१उवायेऽ२ (५.१.१)

---

1. मीऽ२३४वा. क. ग. ओलि क
2. ओब्लि ग. न.
3. गौभाइह्रों ग.
4. वाचनीचपरायाम् ग.
5. प्रथमश्च. घ.
6 इतः परं ग्रासाधातृतयाउवाये घ. अधिकः पाठः

घजाऽ२१उवायेऽ२ (१६.१.७) निबाऽ२१उवायेऽ२ ( १७.२.१७ ) तिस्रोवा ( ४७१ ) [1]पुरोजि ( ५४५ ) प्राणाः ( ५७० ) धेनवः ( २३२ ) जमदग्निव्रते च ( आ. ४.२.१५ ) नीचपरायाम्[2] १ वायाऽ२२उवाऽ२ ( ९.१.१६ ) माहाऽ२२उवाऽ२४२ ( १२.२.४ ) स्येन्यविचवि ( आ. ३.२. ४ ) इ ॥ ४ ॥

## १०४२. न्यरे म ॥ ५ ॥

तालव्यपरेऽक्षरे प्रत्यये मकारः परतो भवति। नेमिः ( ९४ ) क्रीडन् ( ५८४ ) निवृत्तानि। धन्वे ( २४६ ) जनि ( ३७९ ) महिश्र ( ४६७ ) द्रते स्ये ( आ. १.१.१. ) न्यरे म ॥ ५ ॥

## १०४३. ओदे ॥ ६ ॥

ओदेऽक्षरे परतो भवति। विश्वानरस्य ( ३६४ ) एदुमधौहोऽ५० ( १०.२.६ ) पयांऽसि नप्त्योः ( ४७६ ) ओद इति १ अत्रैव। रयाऽ२इऽहोइ ( १५.१.१३ ) भाष्यम्। तक्षत् ( ५३७ ) ओदे ॥ ६ ॥

॥ इत्यतिहारः ॥

## १०४४. लुप् ॥ ७ ॥

लुप्यते चानित्ये। अक्षरान्त इत्यधिकारः। अग्नायेऽ२-राऽ२थाऽ-

---

1. पुरूनत्य ग. पुरूतः घ.
2. इतः परं तरूपणं घ. अधिकः पाठः

२३४० (१.१.११) आऽ२३-रोंऽ२-हाऽ२३४० (३.१.२) पभोऽ२३-भूऽ२-वाऽ२३४० ( ३.२.११ ) चक्राणओऽ२३-[1]पाऽ२शाऽ२३४० ( ३.२.१७ ) पाऽ२र्धुंऽ२३४० ( १०.२.२६ ) [2]अस्यराताऽ२३-सूऽ२ताऽ२३४० ( ६.१. १५ ) गी-यमाऽ२नाऽ२३४० (६.१.१७) दीर्घाऽ३४औहोवा ( ६.१.२१ ) अभिप्रवस्सुरा-धसाऽ३४० ( ६.१.३२ ) सयातंवृपणम्-रथाऽ३४० ( ११. २.८ ) श्रूत्यश्शाकाऽ२इ (७.२.३) [3]प्रियाऽ२-चाऽ२द्धांऽ२३४० (७.२.३३) विश्वशब्दः[4] । वृपावृपा (४.२.६) स्तंतुस्त (?) अगाऽ२३-साऽ२इपूऽ२३४० ( ७.२.१३ ) इत्ताऽ२३:पाऽ२र्धुंऽ२३४० ( १०.२.२६ ) संमील्यततीये ( आ. २.१.२७ ) [5]आयुरिन्द्रंनरः व्रतद्वितीयायाम् । ( आ. ४.१.१४ ) शुक्रचन्द्रयोः ( आ. ३.२.७,८ ) दशस्तोभे ( आ.४.२.१६ ) महाहाइन्द्राः ( ५.१.१४ ) स्याग्नाइ-इहा ( २.२.२१ ) ज्योताइ-इहां ( ८.१.२४ ) अर्यमादाऽ२३इवाइ-इहा ( ६.१.१० ) ममद्रिमाऽ२इ-ऐहीऽ२ ( १४.२.१२ ) ममाऽ२३-द्राऽ२इमाऽ२३४औहोवा ( १४.२.७ ) मम-न्द्राऽ२३४इमाइ ( १४. २.५ ) न्माऽ२३४माइ-एहियाऽ६हा ( २.२.२७ ) वृपाहराऽ२इ ( १४.१. १ ) वृपावृपाऽ६ए ( १५.२.१४ ) शवसेवृत्रहानृभिः ( ४११ ) यहाइ

---

1. पाशा. ग. न.
2. अस्यराता ख. ग.
3. मीत्रा ख. घ. गिया ङ.
4. विश्व क. ख. ग. ङ. न.
5. आयु क. ग. न.

(१५.१.२९) [1]स्वानोअद्रिरितिरहस्ये[2] (आ. ५.१.१२) यदिन्द्रचित्रमौहोवा-[3]हाऽ२३४ना ( ९.१.२९ ) सहस्रधा (५२०) इध ( ४८३ ) अन्वपस्ततर्द ( ६१२ ) देवंवहन्ति ( ३१ ) याइन्द्रेणेति रहस्ये ( आ. ३.१.२० ) आग्नाओऽ२३४वा ( १.२.४ ) स्तोमप्रकरणे नावाहे वोहाइ (?) स्तोताऽ३-उवाऽ३ ( ६.१.५ ) आइभूतादाउभूताच । ररोमभिः ( २४६ ) प्रत्यस्मै ( ३५२ ) न चयतेऽन्तादीनाम् । स्वे अर्केन्द्रादीन् नृणपनेति (?) हितं च । लुप् ॥ ७ ॥

## १०४५. [4]इलु ड्यादिषु ॥ ८ ॥

[5]पदान्तीयस्याक्षरस्य द्वैधं तृतीयादिषु लुप्यते । त्राइणादिषु ( १.२.४ ) निवृत्तानि । चित्रम् ( ४० ) उग्रम् ( ४६७ ) गोभिः ( ४८७ ) स्यदीधितिम् ( ५७० ) रिपात्‌औऽ२३० ( ५.२.८ ) प्रभृतीनाम् । वरुण-स्यार्के ( आ. १.२.१३ ) प्रस्रवणे ( २६१ ) तगूर्तिभिः ( ५६९ ) उदभिः ( ४०६ ) मनीषिभिः ( ५५९ ) नित्यवत्सायाम् ( आ. २.१.२० ) पुच्छे (आ. ५.२.२०) [6]राथन्तरयार्हतेषु प्रस्तावेऽतिहारनिवृत्याम् । शतम् (२५०) आत्यासहस्रनिरामे । [7]न तृतीये [8]पदान्तीयस्येत्यधिकारः । इलु ड्यादिषु ॥ ८ ॥

---

1. अत्र पुनः सर्वेषु कोशेषु वृषा-द्राइ इति समुपलभ्यते ।
2. अभवद्रिरिति घ
3. महद्धाऽ२३४ना (९.१.३०) क.ख.ग.
4. इडु ड.
5. पदान्तस्य क. पादान्तीयस्य ग.
6. रथन्तरे क. ख.
7. न क. न.
8. पक्षती ग.

१०४६. न समानात्प्रथमि ॥ ९ ॥

न समानात्प्रथमि लुप्यते । जह्नत् ( ४ ) जिग्युः ( ६८ ) विश्वा साम् ( १५४ ) नाकेसुप ( ३२० ) प्रथमीति ? त्राइणादीनि । न समा नात् ? सत्यग्न्यादीनि । न समानात्प्रथमि ॥ ९ ॥

१०४७ इदि ॥ १० ॥

इस्थे प्रत्यये न लुप्यते । दूळ्यम् ( ११३ ) त्वऽसन्दृपन् ( १२० ) इदाऽ६मे ( ६.१ १४ ) प्रभृतीनि । इदामिदकम् ( ४.१.३० ) मन्मभिः ( ८७ ) समानादित्यधिकारः । इदि ॥ १० ॥

॥ इति चतुर्थो दशकः ॥

---

१०४८. ह्वात् ॥ १ ॥

ह्रस्वाच्च पर न लुप्यते । स्तम् स्तम् ( २ २.९ ) व्युम् व्युम् ( २. २ ९ ) इन्दुरीहोवाहाईया ( १५ २ २९ ) चित् ( २७१ ) प्रनः प्रनादीनि ( ४ २ २४ ) परीतोप्याम् ( ५१२ ) ह्रस्वात् ? ण्यो ण्योः ( २.२ ९ ) 1महाऽइन्द्रः ( १६६ ) श्रचादीनि । ह्वात् ॥ १ ॥

१०४९. उनि ध्यात् ॥ २ ॥

गीते प्रत्यये द्वैधं कष्ठ्योऽन्त्य[2] एव गीते[3] लुप्यते । स्थाद्दरादिषु ।

1 महऽइद्र ग
2 अन्त्य एव ग
3 गीतेषु क ख ग

निवृत्तानि । इवप्रियम् ( ५ ) कविः ( ४२ ) [1]उदभिः ( ४०६ ) पतिरित्या-दित्यव्रते ( आ. ६.२.१ ) उनि ख्यात् ॥ २ ॥

## १०५०, नोष्मणि नः ॥ ३ ॥

नोष्मणि [2]पदादेः परं लुप्यते[3]। बर्हिः ( ५२३ ) वृषाहरिः ( ४९७ ) अर्यमादेवैः ( २१८ ) बार्हद्गिरे ( आ. ३.१.१६ ) प्रतियस्तोः ( ६३२ ) नोष्मणि ? [4]गोभादीनि । [5]पदादेः ? ऋतस्य दोधितिम् ( ५७० ) नोष्मणि नः ॥ ३ ॥

## १०५१. द्रोण् ॥ ४ ॥

द्रोण् लिङ्गायां लुप्यते । अर्पाऽन्वये (१४.१.१०) । द्रोण् ॥ ४ ॥

## १०५२. माने ग्रामे ॥ ५ ॥

मानेस्तोभे ग्रामे लुप्यते । इन्द्रमित्स्तोता ( २४२ ) इन्द्रक्रतुम् ( २५९ ) प्रेष्ठमिहि ( ४१३ ) मृज्यमानः ( ५१७ ) पवन्तेम ( ५१८ ) मान इति ? घृतैर्गव्यूतिम् ( २२० ) ग्रामे ? यज्ञायथायाम् ( आ.३.२.१२ ) कश्यपपुच्छे ( आ. ५.२.२० ) माने ग्रामे ॥ ५ ॥

## १०५३. मस्सरस्था[6] ॥ ६ ॥

मकारस्संस्था[7] लुप्यते । विपाऽ३-ओऽ२३४वा ( १६.१.३४ )

---

1. उद्भिः क. ख. घ.
2. पादादेः ग. घ.
3. उष्मणि प्रत्यये इत्यधिकः घ.
4. इतः पूर्वं गोपणि इत्यधिकः ग. गोभादीनि क. गोह्यदीनि घ.
5. पादादेः घ.
6. मस्स्थो क.
7. संस्थायाः घ.

इमंवृपणम् ( ५९७ ) मकार इति ? धनूऽ३ः ओऽ२३४वा ( १६.१.३४ ) मस्मङ्स्था ॥ ६ ॥

## १०५४. सन्ध्यात् ॥ ७ ॥

सन्ध्यात्परं[1] लुप्यते । त्वोहाइ ( ८.२.२७ ) पुरूवामौ ( १.२ १ ) सन्ध्यात् ॥ ७ ॥

## १०५५. ओइनमिनि ॥ ८ ॥

ओइनंलिङ्गे साम्नि अन्ताक्षरो लुप्यते । इन्द्रोराजायाम् ( ५८७ ) परंग्रहणम् ? द्वितीये । ओइनंलिङ्ग इति ? व्रतद्वितीयायाम् ( आ. ४.१.११ ) ओइनमिनि ॥ ८ ॥

## १०५६. मे ॥ ९ ॥

विरामे लुप्यते । एतम्रुत्यादीनि ( १७.२.१८ ) ॥ मे ॥ ९ ॥

## १०५७. [2]यिण् दूरे ॥ १० ॥

इकारस्याक्षरान्तस्य द्वैर्ध पदादिर्विदूरे लुप्यते । अयन्तआ ( ४.२.३० ) आतूनआ ( ५.१.१६ ) इमेतआ ( ६.१.४;१०.१,१२,१३ ) सुदुघामा ( ४.२.३६ ) अघाहिया ( ११ १.९ ) त्वऽ्झञ्ज्दा ( १७.२.२९ ) रेवतीर्न इति रहस्ये ( आ. २.१ १८ ) [3]पदादिः ? उक्थादीनि । कयाशचि

1. सन्ध्यात्परं ग घ
2. इण् दूरे ङ.
3. पादादिः घ

( १६९ ) इन्द्रो दधी ( १७९ ) [1]प्रियः क्वी ( ४८१ ) निवृत्तानि। तद्विप्रभृतीनाम्। विदूरे ? इहवासन् ( ५८४ ) यिण् दूरे ॥ १० ॥

॥ इति पञ्चमो दशकः ॥

---

## १०५८, [2]उट् ॥ १ ॥

[3]इकारस्याक्षरस्यान्तस्य[4] द्वेधमन्तर्गते लुप्यते। महाऽ२हाइ- (३.२.१२) दक्षाऽ२३होइ ( ५.१.१९ ) [5]तारमुहुवाऽ२३हो ( ७.२ ३४ ) होहा-कइमम् (१९०) प्रभृतीनि। अस्माकम्-स्ये(आ.३.१.५) निवृत्तानि। होइ-होइ. पराइ० (६.२.१८) प्रभृतीनाम्। स्याग्नादीनि। पदान्तः ? सखायआ (५.१.८) इदाऽ३माऽ५इदाऽ६५६म् (४.१.३०) [6]पदैकदेशे ॥ उट् ॥ १ ॥

## १०५९. वरे दिप् ॥ २ ॥

वकारपरेऽक्षरे प्रत्यये दि पञ्चम्यां लुप्यते। जगृह्मा ( ३१७ ) परिप्र ( ४२७ ) स्ये-अग्निर्मूर्धायाम् ( आ.१.२.७ ) निवृत्तानि। कस्यन् ( ३४ ) नित्यत् ( २.२. १ ) तमिन्द्रम् ( ११९ ) पुष्टावन्तः ( १३६ ) होवाइ-होवाइकयानश्वी ( ५.१.२४ ) हुवाइ-होऽ२वा ( १३.१.१६ ) स्ये-उपत्वाजा ( आ.२.२.९ ) वरे दिप् ॥ २ ॥

---

1. प्रियक्वी क.
2 वुट् ग.
3. उकारस्य ख. ग. घ.
सागरस्य ग.
4. अन्तस्य ग. ग.
5. इतः पूर्वं "इकार" इति ख ग पाठः
6. पादैकदेशे घ.

## १०६०. क्रान्हिनोः ॥ ३ ॥

क्रान्लिङ्गायां हिनो लुप्यते । अक्रान्समुद्रः (४२९) क्रान्लिङ्गायाम् । तिस्रोवाचके ( १५.२.१ ) क्रान्हिनोः ॥ ३ ॥

## १०६१. [1]भे दोसु ( दोस ? ) ॥ ४ ॥

[2]स्तोभे लुप्यते दोसुलिङ्गायामृचि । अभीनोवा ( ५४९ ) अन्वये । दोसुलिङ्गायाम् ? [3]वापिनस्तावपि ? भे दोसु ॥ ४ ॥

## १०६२. घे प्रथमि ॥ ५ ॥

दीर्घे स्तो भे प्रथमि लुप्यते । इन्द्रंविश्वोपान्त्ये ( ९.१.२२ ) परिस्वानान्त्ये ( १३.१.३६ ) इन्दुः पविष्टायें ( १३.२ ६ ) निवृत्तानि । होइ होइ प० (६.२.१८) प्रभृतीनाम् । हाहोइ होऽ३हा-प्रियाः० (१३.२.६) पश्वानुगाने ( आ.३ २.१५–१९ ) तिस्रोवाच विश्वेदेवायाम् ( ५२५.६१० ) दीर्घ इति ? हयाइ-हयाऽ३ ओहाओहा ( ९.१.२२ ) घे प्रथमि ॥ ५ ॥

## १०६३. न हाहि ॥ ६ ॥

न हाहि प्रत्यये लुप्यते । हाहोइ ( १३.२.६ ) हाहोइ-हाहा । ( १३ १.३६ ) [4]त्वमेतत् ( ५९५ ) विरतत्वात् । न हाहि ॥ ६ ॥

## १०६४. ओयेः ॥ ७ ॥

ओयेश्च परं लुप्यते । ओऽ३हा ( २.१.६१ ) घचम् ( ३०६ )

---

1 भोदोसु ग भेदेपु घ
2 स्तोभो लुप्यते क
3 वापिनमस्तावपि ग.
4 अमेतत् घ

न　२ न　२　२　　　　　　　　　　　　　　　　　　न　२
ओऽ३हा-ओऽ२हाऽ३ए-पुरा० ( ९.२.२२ ) स्वादिष्ठ ( ४६८ )। ओऽ३हा (११.२.१२) पुनातृतीये (१४.१.२३) अभित्रिपृष्ठम् (५२८) एषब्रह्मा (४३८)
　　　　　　　　　　　　　　न　२　　३१२
त्वयावयम् ( ५९० ) ओयेरिति ? परिष्टोभन्तु ( १५८ ) ओऽ२हाऽ३४-ओहा ( ८.१.२७ ) अप्रथम इत्यधिकारः। [1]यदिन्द्रनाहुषीषु ( २६२ ) प्रभृतीनामुद्धुस्य विशेषः। ओयेः ॥ ७ ॥

## १०६५. [2]ष्ठावतो होः ॥ ८ ॥

　　　　　　१ २　　　　　१ १ १
ष्ठावतः पर्वणो द्वैधं होः परं लुप्यते। होयेऽ३-होऽ२३४५ ( ६.२.३५ ) निवृत्तानि। ओऽ३होऽ३होइ (१८.२.६ ) जुषोवा ( ६.१.२ )
२　　२ ४ २　　　　　३　　२
ओऽ२३४हाइ-स्यनोवा ( ४.१.८ ) ओऽ२३४हाइ ( ११.२.३२ ) विश्वतो दावन् ( ४३७ ) [3]आविशन् ( ४८९ ) पवस्वमोम ( ४२९ ) दिवोदुहमोऽ-
２ १　　३
२३४हाइ ( १७.२.१९ ) ष्ठावतो होः ॥ ८ ॥

## १०६६. लोः ॥ ९ ॥

　　　　　　　　　　　　　　　　　　　　１
होशब्दाद्द्वैधमतिक्रमादेव परं लुप्यते। होऽ२३४तियाः ( १.१.३३ )
न　२　१ २१ ११　　　　　　　　　　　　२　२
होऽ२हा-प्रियाःकवी-नाम्म ( १३.२.६ ) निवृत्तानि। [4]ओऽ३होऽ३-
१　३　　२
होइ-सूऽ२३४प्वा ( ८.२.६ ) लोः ॥ ९ ॥

---

1. यदिन्द्र ग. न.
2. ष्ठावतः होः घ.
3. आविशन् ख. ग. न.
4. ड. कोशे वारद्वयं लिखितम्.

## १०६७. आवो द्विवतः ॥ १० ॥

औकारात्परं[1] द्विवतः पर्वणः लुप्यते । वरौहोऽ२ ( ५.२.१८ ) [2]ख्यौहोऽ३ (५.१.२५) अच्छाक्रोशादीनि (१४.२.२२)। एषब्रह्मौहो (११.२. ३८) [3]इन्द्रोनामौहो ( ११.२.३८ ) पतिर्विश्वौहो (१६.१.१३) सुवर्विदौहो ( १७.१.७ ) ऋचौऽ३हो ( २.१.१५ ) सपौऽ३हो ( ९.२.१ ) [4]सम्रौऽ३हो ( १०.१.२२ ) [5]भद्रौऽ३हो ( १०.१.२२ ) [6]आश्वौऽ३हो ( १४.२.२५ ) त्वायुजावनौऽ३हो ( ३.२.३१ ) क्षतत्वौऽ३-होऽ३इ[7] ( ८.२.१४ ) चन्द्रौ ( ११.१.३५ ) उलाऔऽ२होऽ३४ ( १०.१.३३ ) [8]भृताऔऽ२होऽ३४ ( १७.१.३३ ) स्तोम-वा-औऽ३हो ( ५.१.९ ) वज्रोनियत्सताऔऽ३हो ( ११.१.२७ ) आम्रौऽ३हाऽ३४ (   ) आतूऔहो (५.२.४) ऐरिणा-दीनि (आ.१.१.१८) द्विवत इति ? औहोइ-शम्पदाम् (१२.१.४) औहोऽ१इ-गावो० ( ४.२.३ ) वैराजे ( आ.२.१.३१ ) धेनुनि ( आ. ३.१.७ ) राजने ( आ. ४.२.१९ ) औऽ३होऽ३१येऽ३-जाऽ२हा०[9].( ५.२.२० ) न्तुरौऽ३-होऽ३१येऽ३ (६.२.१८) [10]मानइन्द्रा (१२८) औऽ३होऽ३१येऽ३-औहोऽ-२३४५वाऽ६५६ ( १२.२.२७ ) स्तावनः सह्वाते । शंयन् हा औऽ३होइ-

1. परं क. ध. न
2. ख्यौ घ.
3. इन्द्रोनामौहो घ. न.
4. भद्रौहौ क.
5. सम्रौहो ड.
6 आश्वौ हो ड. न.
7. इ ग. न.
8 भ्राता औहो ख. घ. ड.
9. हा क. ग. न.
10. माइनाइन्द्रा ड.

गाऽ२३४वाइ ( ३.२.१ ) औहोइतुवाम् ( ८.२.२६ ) शग्म्यूप्वौहोऽ५इ०

( ७.१.११ ) पर्यान्त इत्यधिकारः । आवो द्विवतः ॥ १० ॥

॥ इति षष्ठो दशकः ॥

---

## १०६८. सार्वे[1] ॥ १ ॥

सार्वे स्वरे लुप्यते । हौहोऽ२ ( ९.२.५ ) इन्धेराजा[2] ( ७० ) इन्द्रज्येष्ठम् ( ५८६ ) सधमादे ( १५३ ) सार्वे ॥ १ ॥

## १०६९. इको ह्मौ ॥ २ ॥

इक्परस्य द्वैधं ह्मौसंघातस्य लुप्यते । एषब्रह्मादीनि (११.२.३८) अन्यत्। अग्नौ होइ-त्वौ-होइ ( १२.१.१३ ) गायतौहो-गायतौहोयेऽ२ ( १७.१.१४ ) नयह्मौहोइ-नयह्मौहोयेऽ३ ( १७.१.१४ ) इको ह्मौ ॥ २ ॥

## १०७०. तत् ॥ ३ ॥

अवृद्धाल्लुप्यते । आनो विश्वासु ( २६९ ) होत्वमिन्द्रा ( ६.२.३५ ) इन्द्राऔऽ२ही ( ७.१.२३ ) निवृत्तानि । अत्रैव ॥ तत् ॥ ३ ॥

## १०७१. भाग्दिः ॥ ४ ॥

स्तोमात्परस्य[3] द्वैधं मिश्रशब्दान्तायामृचि लुप्यते । आतूऔहो

---

1. सर्वे घ.
2. अन्धेराजा ग.
3. परं क. ख.

( ५.२.४ ) हाओहायत्सोममा ( १०.२.३ ) निवृत्तानि । ओहाइ-यदिन्द्रना हुपीपूऽ६चा ( ७.१.३२ ) औंहोइतुवाम् ( ८.२.२६ ) औहोइनिधस्या ( १२.१.१९ ) त्वमिन्द्रप्रतूर्तिषु ( ३११ ) रहस्ये ( आ.२.१.११ ) न्यस्मिन्निन्द्र ( आ. ३.१.३० ) कायमानशुक्रियात् पूर्वे ( आ. ६.१.३ ) होवाइहोवाइकयानश्री ( ५.१.२४ ) पर्यौहोवाहाइ० ( १३.१.३६ ) प्रभृतीनि । भाक्तिः ॥ ४ ॥

## १०७२. [1]यि नर्गौ ॥ ५ ॥

यकारेऽप्रथमे लुप्यते । [2]अश्वद्वितीये ( १.१.२९ ) कायमानः ( ५३ ) अर्कतृतीयाद्ये ( आ.१.२.१ ) धेनुनि ( आ.३.१.७ ) अप्रथम इति ? आतेयत्मः ( ८ ) पिनाशुतस्य ( २३९ ) तिस्रोनाचके ( ५२५ ) यि नर्गौ ॥ ५ ॥

## १०७३. [3]अन्तः पदे ॥ ६ ॥

अन्तः पदे लुप्यते । स्तोभे वा यकारे वेत्यधिकारः । एसुप्रनाहोणाइताइ ( १.१.१५ ) नमस्तो होग्नाइ ( १.१.२० ) होऽ३हाऽ३-होऽ२३४-तिंयाः ( १.१.३३; ७.२.२१ ) इममूषु ( २८ ) मतांऽ३हो ( २.२.२४ ) होन्वाऽ२३४इराइ ( ३.१.३१ ) प्रव इन्द्रायाम् ( १५६ ) त्रियाऽ३हो स्तुहीं० ( ५.१.२ ) स्तुर्याऽ३होऽ३.हयाऽ५त्रिणाइ ( ५.१.१४ ) प्रमित्रा-

1 इनर्गौ ग.
2 अश्वद्वितीये क. ख ग घ.
3. अत पदे घ.

याम् ( २५५ ) आनौहो-नमौहो ( ७.२.१५ ) म्यांयाऽ२३हो ( ८.१.१४ ) [1]विश्वाऽ३४-नरस्यवौ-हो० ( ९.२.२७ ) अचआद्ये ( १०.१.१ ) एदुमधौहो-ऽ५० ( १०.२.६ ) यद्यामरुत्सुमाऽ२३हो ( १०.२.३ ) वंधो० ( १३.१.३६ ) औऽ३हो भियोऽ२३४वा ( १५.१.६ ) तवाहऽ्मोसंघाते[2] । मृज्याष्टमे ( १५.१.१३ ) अज्ञते ( ५६४ ) तक्षत् ( ५३७ ) परित्यम् ( ५५१ ) दुदुह्रिरे ( ५६० ) हा-हौऽ३४३-स्य० ( १७.१.४ ) तंगूर्धया ( १०९ ) [3]प्रधन्वायाम् (५६७) हो-विद० (१७.१.४) सोमःपुना-हो (१७.१.३१) प्रपुना (५७३) आसोतायाम् (५८०) औंहो (२.१.३२) तसो गदस ? साहाऽ३हा ( १.२.३ ) ऊर्वदयाऽ२३हा ( १.२.३१ ) प्रशौहोवाऽ३हाऽ३ ( ३.१.३४ ) तुनोगिरः ( २.१.१३ ) होवाऽ३हा-प्नियऽ्मुऽ२३४५वाऽ६५६ ( ४.१.२४ ) हाऽ३हा-पणाऽ२इ ( ४.२.१६ ) अर्कमर्च ( १५८ ) सुवाऽ२३हा ( ७.१.१३ ) ये-चत्ये ( २५४ ) पृ. णान्-आइत्पृऽ३हा[4] ( ८.१.१,२ ) ताइहसाऽ३ ( १६.२.२६) स्पदीधिताऽ२३इम्-हो० (१७.१.२३) प्रायंमित्रम्० ( १.२.२५ ? ) प्रायंमाइत्राऽ२म् ( १.२.२४? ) दूराऽ२३याम्[5] ( २.२.२७ ) कुवाकुवा ( ४.१.२७ ) अप्रधम इति ? द्रकेहोऽ२इ ( ६.२.२५ ) स्यसाहोऽ२इ ( १४.१.

---

1. विश्वा क. ग. न.
2. सोमंघाते ग.
3. प्रधारायाम् घ.
4. आइत्स्पृहा क.
   आइत्भृहा ग.
5. दूरायाम् ग.

२७) हाहोइ-जनि (४.२.१३) त्वमेवत् (५९५) सखायोदीर्घजिह्वयम् (५४५) मिपामन्तोवनामहे ( ५९३ ) वस्वीरनुस्वराज्यम् ( ४०९ ) सवाजेपुप्रनोवि-पत् ( ४११ ) नवाऽ२३होइ ( ११.१.३४ ) नाइमाऽ२३हाऽ३४३इ ( १३.१.२८ ) देवावीराऽ२३ हाइ. या० ( १३.१.६ ) [1]अ-का-स्ययोऽ२३-हाऽ३इ-नि० ( १३.१.१७ ) वाहाऽ३इ. याऽ२या० ( १३.१.२९ ) [2]माधू-ऽ३हाइ-मान्त्सोऽ२३ ( १७.१.२५ ) [3]घृया० ( १२.२.२१ ) यपातयाइ ( १२.२.२१ ) हाऽ३-हाऽ३इ-तावाऽ२रूऽ२३४णाम् ( ८.१.६ ) होवा-ऽ३होइ-का० ( १-२.२९ ) स्रियोऽ३हो-वाहाऽ३४३इ ( ५.१.२७ ) अन्तः पदिके ? चाइत्राऽ३१ हाइ ( १.२.३४ ) आदीनाम् । नाइयेसुरित् ( ६.२. २८ ) उमाऽ३१७इयाऽ२३४त्वा ( १०.१.७ ) । अन्तःपदे ॥ ६ ॥

## १०७४. था ॥ ७ ॥

धालिङ्गायां लुप्यते । हाहो-थांगीभिः० ( ९.१.१० ) धर्तादिवः ( ५५८ ) अन्यये । संकृतिनि ( आ.३.१.१७ ) स्वरीयोन्त्ये ( आ.३.२.२५ ) था ॥ ७ ॥

## १०७५. ष्णिहि ॥ ८ ॥

उष्णिहि लुप्यते । तंविषम्-आ-निगाऽ२३हाऽ३-मानासोऽ२३४या

---

1. आर्कस्ययो ग.
2. मधु प.
3. घृया हाहाइ क. धाया हाहाइ यन्द्रा हाइ ग. घृयाहाहाइ ह.

२ १ — १ २२ २ १ १
( १०.१.२८ ) वृषाहोऽरणंपृक्षू०-(१०.१.३२) औहोऽ३-राऽ२वाऽ२३४०

( १७.१.३७ ) ण्णिहि ॥ ८ ॥

## १०७६. सणि ॥ ९ ॥

१ २ २ १ २१२ २ १
संयोगे [1]लुप्यते । [2]होवाऽ३हा-त्राह्यानाम् ( २.१.२९ ) हाऽ३हा-

१ २१ १ २ १ — २ १२ २ २
स्याधाम्ना ( ३.२.९ ) भिराहोऽ२ ( ५.२.२१ ) त्रदंवाजाऽ३हाऽ३ ( ५.२-

१ २ २ १ २ १
२१ ) होवाऽ३हा-सम्रणंसम् ( १६.१.२७ ) हाइ न्वाऽ९० ( १४.२.५ )

सखायो दीर्घं जिह्वयम् ( ५४५ ) विपरे प्रतिषेधः । विश्वावसू तु[3] ( ५८१ )

सणि ॥ ९ ॥

## १०७७. एन्देऽवावति[4] ॥ १० ॥

२२१ २ २
एन्दे पादेऽवावति गीते लुप्यते । देवंमर्ताऽ३हाऽ३ ( २.१.३३ )

१ म २ ३१२ १ २ ३ ५ १
च्यमूऽ३हाऽ३ ( ३.१.३१ ) हाहोऽ३-यामत्वाऽ२३४नाइ ( ३.२.२ ) हो-

म — १ — १ —
यावत्रिणऽ२३ ( ८.१.२ ) अवावतीति ? हुवाऽ२इ-चाइपाऽ२इ ( ३.१.२८ )

१ २ —
दाइचोऽ१हियाऽ२ ( १.१.१९ ) आदीनि । एन्देऽवावति ॥ १० ॥

॥ इति सप्तमो दशकः ॥

---

1. संयोगे प्रत्यये ड.
2. होवाह्य ग. न.
3. तू विश्वावसूतू क. ख ङ.
4. अवावति ग.

## १०७८. मिनोरस रे ॥ १ ॥

मकारिणोरक्षरयोरसपरे लुप्यते । मन्युंजनस्य ( ११३ ) रिस्नेभिः ( १८० ) सो-औऽ३होऽ३ मापोऽ२३४ो[1] ( ४.२.२० ) समूढम् ( २२२ ) स्तोताऽ३हा ( ७.१.१३ ) दीर्घाहोऽ२ ( ७.२.६ ) वृपाहोऽ२ ( १०.१.३२ ) पवाऽ२हो-मानाऽ२हो ( १५.१.१३ ) हाऽ३हा-मामद्रिभिः ( १४.७.१० ) आकाऽ३हा-लाशाऽ२म ( १७.१.२५ ) [2]नसपरे ? नर्यापसम् ( १२५ ) जुह्मसि ( १६० ) मधुमान् ( ५७१ ) सवार्चिकादेरित्यधिकारः । अंस्वतु ( ४७२ ) मिनोरस रे ॥ १ ॥

## १०७९ रेफेऽनुच्चपरे ॥ २ ॥

रेफेऽनुच्चपरे लुप्यते । हो-रथी ( ७.२.३४ ) हो-रयिम्मोमा ( १४.१.८ ) अयंपूपा-हो-रयिभगाऽ६ए ( १६.१.१५ ) होऽ२३४-रोदमी० ( १०.१.१ ) उपनोहाहोहा-राइमीः ( ४.२.११ ) अनुच्चपर इति ? उद्धुवाऽ२३हाइ-रथानाम् ( ४.२.९ ) स्तोत्रम्राजसु ( २५५ ) रिहते ( ४०४ ) चाइत्राऽ२ह्हाइ ( १.२.३४ ) ओइरात्मादीनाम् ( २.२.१९ ) अप्रथम इत्यधिकारः । [3]रेफेऽनुच्चपरे ॥ २ ॥

## १०८०. स्वे ॥ ३ ॥

स्वशब्दे च परे लुप्यते । हो-स्वाराजियम् ( ११.१.१८ ) औऽ३-

---

1. मापो ग, घ.　　अस्वरे ह.
2. न त परे घ.　　3. रेफानुच्चरे घ.

२ ११ ५
हो स्वधाराऽ२३४या ( १२.२.२६ ) स्वे ॥ ३ ॥

## १०८१. दि ॥ ४ ॥

१ २ ३ १
न[1] दिप्रत्यये लुप्यते । समिन्दुभिः ( ३८४ ) होवाऽ२हाइ-द्रमूऽ२३
१ अ — ५१ ३२ ३१४ १४
( ५.१.७ ) होइ-[2]द्रताऽ२इ ( ९.२.९ ) गृणे-तदाऽ३४-औहोऽ५इन्द्रतेशवाः
४१ २ १४
( १०.२.१९ ) गृणेतदौहोऽ५इन्द्रतेशवाः ( १०.२.२० ) इत्यादीनि । न
१ —
दि ? समूऽ२होऽ१ ( ६.१.१४ ) यद्वामरुत्सु ( ३८४ ) असपर इत्यधिकारः । दि ॥ ४ ॥

## १०८२. ओ खिडि ॥ ५ ॥

१ अ —
ओकारः खिडि प्रत्यये न लुप्यते । ओइ-ययूऽ२ः ( १.१.२२ )
१ २ २ १ २ २ १ २ २
ओइनाऽ३याः ( ६.१.२६ ) ओइनूऽ३माः ( ६.१.२६ ) ओयेऽ३-रसाऽ
३४३ः ( ११.२.१६ ) ओ खिडि ॥ ५ ॥

## १०८३. [3]इ प ॥ ६ ॥

१ १२ २१ १२ २
इ पश्चम्यां न लुप्यते । महाऽ२३होयेऽ३ ( ३.१.८ ) पुनानोहोयेऽ३
१२ ५ ४
( १७.१.१४ ) होयेऽ३४-पुनर्धताइ ( १६.२.४ ) इ प ॥ ६ ॥

## १०८४. आ खिडः ॥ ७ ॥

३१ २ २३२
[4]आकारः खिडः परो लुप्यते । एहिया ( १.२.२२ ) गृणआ

---

1. न तु दिप्रत्यये ख. ग.
2. द्रमाइ ग.
3. इपू क. ख. ग. घ.
4. अकारः ख ग. घ. ङ.

२ ३ २ २३१२
( ११.२.३४ ) घ्वराआ ( २.१.१७ ) मदाआ ( १६.१.१६ ) आत्वादीनि । निवृत्तानि । आऽ२३४इनिदाइ ( ५.१.२१ ) [1]आउवृपा ( १२.२.२६ ) आइपुना ( १४ १.२५ ) आइत्वमेतात् ( आ. २.२.२२ ) आऽ२इस्तोता० ( ३.२.१९ ) आऽ२इ-पिबेदस्याऽ२३४हाइ ( ५.१.५ ) प्रत्यस्मै ( ३५२ ) आ खिदः ॥ ७ ॥

## १०८५. न प्रम्रसहयोः ॥ ८ ॥

*न प्रम्रसहयोरसंयातयोर्लुप्यते । प्रम्रयम् ( ३५ ) [2]सहस्य ( ९७ )* इन्द्रस्यधा ( ११८ ) हिम्मायेऽ३ रीऽ२३४याम् ( १४.१९ ) हिम्मायेऽ३-पूऽ२३४वा ( १४.१.११ ) हिम्मायेऽ३-[3]प्रूऽ२३४ताम् ( १७ २.१२ ) न प्रम्रसहयोः ॥ ८ ॥

## १०८६. थि दन्त्ये ॥ ९ ॥

थकारिण्यां दन्त्ये लुप्यते । आईऽ३शाम् ( ६.१.२६ ) आऽ२३-स्थूऽ२ पाऽ२३४ ( ६.१.२६ ) अग्निरोट्ट ( ८७ ) सुताय माद्याऽ२३या-हिम्माऽ२१२ ( १६.१.१२ ) हिम्माऽ२३-ताऽ२३४माः ( १२.१.१२ ) थकारिण्याम् ? प्रम्रयम् ( ३५ ) [4]दन्त्ये ? वाऽ३चाऽ३ः[5] ( २.२.२७ ) थि दन्त्ये ॥ ९ ॥

1. आवृपा ग.
2. महेन्द्रस्य क. ग. घ.
3. पूताम् ग.
4. अन्त्ये घ
5. वाश्याः ग.

## १०८७. दु सूष्वा ॥ १० ॥

उदुह्वस्य द्वैधं सूष्वाया लुप्यते । इन्द्रं विश्वाः ( ३४३ ) ऋतस्य दीधितिम् ( ५७० ) निवृत्तानि । वायोरनाहाङ्काया ( १.१.२३ ) सुवो हाइ (१.२.११) अत्याटीनि (१०.१.८) विश्रुमङ्कथः (३२६) यदिन्द्रनाहुपीष्वा ( २६२ ) यद्वीडा ( २०७ ) विस्वरादित्यधिकारः । एह्यूषु ( ७ ) आकार इत्यधिकारः ॥ दु सूष्वा ॥ १० ॥

॥ इत्यष्टमो दशकः ॥

---

## १०८८. [1]प्वायुङ्नतिनः ॥ १ ॥

प्वायुक्तस्य पर्वणो द्वधं [2]संयोगे प्रत्यये लुप्यते [3]तिनोऽक्षरात् । न्यौंहोयाऽ३हा ( ८.१.३४ ) अर्चन्तियोऽ२३४हा ( ९.१.१५ ) नस्सोऽ२३४हा ( १६.२.१० ) निवृत्तानि । उद्व२्शमोऽ२३४हाइ[4] ( ९.१.१५ ) अश्नोऽ२३४हाऽ[5]नाऽपः ( १६.२.१० ) [6]सो-म-पतेऽ३हाऽ३इ ( ११.१.३ ) दिव्यंवृणीमहे ( ४६१ ) तिन इति ? विद्धीत्वोऽ२३४हाइ ( ४.१.९ ) अप्रतिष्कुतः ( ३८९ ) प्वायुङ्नतिनः ॥ १ ॥

---

1. द्वायुक् मै.
2. सयोप्रतये ग.
3. अतिनः ग.
4. उद्व२्शाऽ२३४मी (९.१.१६) क.ख ग.
5. नाऽपः क. ख. ड. न
6. सोमाः पाहाइ क. ख. सामपाते ग.

## १०८९. अऽरे ॥ २ ॥

अंपरे वर्णे प्रत्यये न लुप्यते। हाऽ३इ-तमद्राइवाऽ२३ः ( ९.१.२८ ) [1]हाऽ३हाइ-तमारियस्यवर्द्धनम् ( २.१.१३ ) वराऽ२३हाऽ३इ ( ११.१.३१ ) अंपर इति ? सुतासोमायाम् ( ५४७ ) तपर्वणा ( २५७ ) नार इत्यधिकारः। अऽरे ॥ २ ॥

## १०९०. वाचि ॥ ३ ॥

वाचि प्रत्यये लुप्यते। [2]भरद्वाजादीनि (१.२.२९) ओऽ२ईऽ२ऽ३या ( ३.२.१२ ) ररोमभिः ( २४६ ) अहम्रहिम् ( ६१२ ) [3]धर्ममक्षायाम् ( ८२ ) गतिरपर्वान्तायामित्यधिकारः। वाचि ॥ ३ ॥

## १०९१. वौ[4] ॥ ४ ॥

वौशब्दस्य वाचि प्रत्यये लुप्यते। सर्वाश्राओऽ२३४वा;र्ग्गाओऽ२३४वा ( १.२.१४ ) वौशब्द इति ? अत्रैन। अपर्यान्त इति ? दूर्वाऽ३२३४-स्यूः[5] ( ८.२.२९ ) वौ ॥ ४ ॥

॥ इति लोपः ॥

## १०९२. वन् ॥ ५ ॥

वन्तश्च भवति वाचि प्रत्यये। आकार इत्यधिकारः। [6]आर्नीरुया०

1. हाइहाइ ग.
2. इतः प्रभृति चतुर्थसूत्रीयभाष्यगतलुप्यते पर्यन्तं घ न
3. धं भक्षायाम् घ.
4. वौ. ग.
5. मुः ग म्युः ग..
6 अनीरयाश्या ये घ.

( २.२.३० ) ह्यामूतया० ( ४.१.१ ) मुनीनाम् ( २७५ ) सुपावसो ( ५१२ ) आकार इति ? म्यमूऽ२३४वा ( ४.१.२१ ) द्रमूऽ२३४वा ( ५.१.६ ) होवाइ ( ५.१.२४ ) प्रभृतीनि । वन् ॥ ५ ॥

## १०९३. हि ॥ ६ ॥

हि वाकारे[1] वन्तं भवति । हाउवादीनि ( ५.२.५ ) हि ॥ ६ ॥

## १०९४. दु ॥ ७ ॥

उदुहस्य पर्वणो हाशब्दो [2]वन्तो भवति । त्वमिन्द्र ( १२० ) [3]तमुअभि ( ३८२ ) इन्द्रोमदा ( ४११ ) योनिश्वा ( ४४ ) श्रुष्ट्यग्ने ( १०६ ) बृहद्भिः ( ३७ ) अत्रा ( १४७ ) वर्मीप्रभृतीनाम् । रहस्ये च । अग्ने जरि ( ३९ ) उदुहस्येति ? विद्धिप्रभृतीनाम् । हाशब्द इति ? कपे ( आ. ४.२.१५ ) दु ॥ ७ ॥

## १०९५. हवोयुग्जारायाः ॥ ८ ॥

हयो युक्तं [4]जाराया वन्तं भवति । मानोहाउ (३.१.३५) योनोहाउ ( १०.२.३४ ) हावाज्ञा[5] ( १६.२.३३ ) अन्वर्थे । अन्यत् । न्माऽ२३४-माइ ( २.२.२७ ) [6]युवा सखा ( १३३ ) [7]अचे ( ३७१ ) होऽ५तोऽ६हाइ

1. वन्तारे ख. ग.
2. वन्तं क. ख. ग.
3. तमुवभि क. ग.
4. जारा ख.
5. हावज्ञवे क. ग.
6. युवातसखा ख. युवाता ग.
7. अता ग.

( १.१.८ ) सुवोहाइ (१.२.११) वसोऽ२हाप्रभृतीनि । हवोयुग्जारायाः ॥८॥

## १०९६. इष्टायाः नाम्यादेः ॥ ९ ॥

इष्टायाः द्वैधं नाम्यादिन्या ( नाम्यादेः ? ) वन्तं भवति । देवानाम् (१३८) योगे (१६३) स्तोमस्यवी (१०६) पुनानस्सो (५११) निवृत्तानि । महाहाऽइन्द्राः ( ५.१.१४ ) आनोविश्वासुहाहा० ( ७.२.८ ) वनौहोप्रभृतीनि । इष्टायाः नाम्यादेः ॥ ९ ॥

## १०९७. ह्रस्ये ॥ १० ॥

रहस्ये द्वैधं द्विके[1] वन्तं भवति । मर्पसामान्त्ययोः ( आ. २.१.९, १० ) इमाउवायाम् ( आ. ४.१.१५,१६ ) निवृत्तानि । त्वमेतत् ( ४९४ ) यण्वे ( आ. ३.१.११ ) ह्रस्ये ॥ १० ॥

॥ इति नवमो दशकः ॥

---

## १०९८. यात् ॥ १ ॥

यशब्दाच्च परं रहस्ये वन्तं भवति । यऽउकामि ( २६४, आ. ३. १.१,२ ) निवृत्तानि । इयाहाइ ( २.२.२३ ) यात् ॥ १ ॥

## १०९९. वात् ॥ २ ॥

[2]वाशब्दाच्च परं रहस्ये वन्तं भवति । पुरुषव्रताये ( आ. ५.१.१३ )

---

1. तिके क. ग. घ. ङ.　　　　2. वान्ङन्तान् ग.

४१४ २४ ५
निवृत्तानि । कडमम् उहुवाहाइ ( ५ २ १५ ) आदीनि । वात् ॥ २ ॥

## ११००. नेरि ॥ ३ ॥

नेरिलिङ्गायां वन्त भवति । अग्नि न स्ववृत्तिभिः[1] ( ४२० )
३ ५ २
गऽ२३४ वीऽ६हाइ ( १४.२२१ ) नेरि ॥ ३ ॥

## ११०१ [2]ओइन्त्रि ॥ ४ ॥

२ ३ २
ओइन्त्रिकाया वन्त भवति । हाउहो५हाउ (१२.१.४१) ओइन्त्रि ॥४॥

## ११०२. तद्वथादिः ॥ ५ ॥

तद्विनिद्धाया आदिर्वन्तो भवति । स्वरीयसा पश्वानुगाने ( आ ३.२.१५–१९ ) तद्वथादिः ॥ ५ ॥

## ११०३ नइ ॥ ६ ॥

नइन्द्राया वन्त भवति । अभित्यदेवायाम् ( ४६४ ) नइ ॥ ६ ॥

## ११०४. [3]त्रम्पा ॥ ७ ॥

त्रम्पास्तोभस्य वन्त भवति । [4]ऐरिणे (आ ११.१८) इन्द्रोराजायाम् ( ५८७ ) त्रम्पा ॥ ७ ॥

## ११०५. हाउतुडि न भयुक् ॥ ८ ॥

हाउतति प्रस्तावेऽनाकारस्तोभयुक्त [5]वन्तं भवति । एनानः ( ४५ )

---

1 इत परं 'इरि' घ,
2 सूत्र क न ओइन्नी मे पा
3 त्रप ग
4 ओऐरिणे ग ओलि ऐरिणे क ओं ऐरिणे ग
5 अनकारस्तोभयुक्तं ख

[1]पिबासु ( २३९ ) योनः ( ४०० ) ससुन्वे ( ५८२ ) वार्कजम्भे ( आ- ३.१.२७ ) आतूनइ ( १८१ आ. ४.१.३ ) अनाकार इति ? अत्रैव । स्तोभयुक्तमिति ? भरद्वाजे ( ३७ ) पुरुत्वा ( ९७ ) चाऽत्राऽ३२हाइ ( १.२- ३४ ) ईशेहाऽ२३इ० (२.१.२९) दूषेऽ३हाऽ३इ ( ९.२.११ ) स्तूपऊपूऽ३- हाइ ( १०.२.१५ ) [2]अनायेरिति वाच्यम् (?) हाउतुङि न भयुक् ॥ ८ ॥

## ११०६. पोषु ॥ ९ ॥

[3]पोपुस्तोभो [4]वन्तो भवति । बलादधि ( १२० ) इन्द्रोराजायाम् ( ५८७ ) हाडतुडीति ? पान्तम् ( १५५ ) पोषु ॥ ९ ॥

## ११०७. द्वयोः पूर्वस्य प्राचु[5] ॥ १० ॥

द्वयोर्हाशब्दयोः पूर्वस्य द्वैधं प्रादिन्यां (प्राचायां ?) [6]वन्तो भवति । हाउहाउ-हुप् (१५.१.३६) निवृत्तानि । वयोहाहाउ ( ८.२.१३ ) सुरूहाहाउ (४.२३४) भर्गो ( आ. २.२.११ ) हाउहाउवादीनि द्वयोरिति ? [7]राथन्तरे ( आ.५.१.१० ) द्वयोः पूर्वस्य प्राचु ॥ १० ॥

॥ इति वन्तविधिः ॥

॥ इति दशमो दशकः ॥

॥ इति सामतन्त्रभाष्ये[8] एकादशः प्रपाठकः ॥

---

1. बिभासु ग.
2. भानाशयानायेरिति ख. ग.
3. भाष्यं घ. न.
4. वन्तं. क. ख. ग. ङ.
5. प्राञ. ङ.
6. वन्तं. क. ख. ग. घ. ङ.
7. रथन्तरे क
8. सामतन्त्रे क. ख. ग. घ. ङ.

## ॥ अथ द्वादशः प्रपाठकः ॥

### ११०८. अ२सा ॥ १ ॥

२ १२ १ ३
अमापद्यते साशब्दः। सहमेहे५३होऽ२-याऽ२३४० ( ४.१.३४ )
१२ १२
सहाऽ२३होयेऽ३४ ( ९.२.१९ ) प्रादिन्यामित्यधिकारः। अ२सा ॥ १ ॥

### ११०९. पा ॥ २ ॥

पाशब्दश्चामापद्यते। शुचिबन्धुः पावकः[1] ( ५२४ ) सामचतुष्टये
२२१ २
( १५.२.३३–३६ ) प्रादिन्याम्? रेवात्पाऽ१वाऽ२३ ( १.२.२९,३० )
१ १ ५
पाहोऽ२इगाऽ२३४ऽर्मीः ( १.२.२७ ) पा ॥ २ ॥

### १११०. दु[2] ॥ ३ ॥

४ २ ५
उदुहस्य पाशब्दोऽमापद्यते। कृपापगाहाउ ( २.२.२२ ) दु ॥ ३ ॥

### ११११. गि ॥ ४ ॥

४ ५
गिशब्दश्चोदुह्येऽमापद्यते। [3]ग-वाहाइ ( ५.१.११ ) गि ॥ ४ ॥

### १११२. रिखासिभ इदि ॥ ५ ॥

२ र २
रिखासिभइत्येते शब्दा इस्थे स्तोमेऽमापद्यन्ते[4]। हरईऽ३या
२ र २ १ २२ १
( ४.२.२१ ) सखईऽ३या ( ४.२.२१ ) दामीउम इहाऽ२३ ( १६.१.१४ )
२११ — १ —
उर्मिन्नरिभ्रदर्पसईयाऽ२० ( १४.१.१९ ) मएऽ२० ( १४.१.१८ ) इस्थ

---

1. पावकः घ.
2. ड. फ. घ. ग. ह.
3. गियाहाइ घ.
4. आपद्यते च. ग.

इति ? अत्रैव । आदिन्याम् ? मन्येवाथाम् ( ६२२ ) रिखासिभ इदि ॥५॥

## ११११३. इ दि ॥ ६ ॥

[1]इकारमापद्यते दकारे स्तोभे । [2]खाशब्द इत्यधिकारः । सखिद२ऽ३दा१ ( ४.२.२३ ) स्तोभ इति ? खुखा१दा२ऽ३२३४याइ४ ( १२.१.३३ ) इ दि ॥६॥

## ११११४. ऋणि सार्वायाः ॥ ७ ॥

[3]ऋणिशब्दस्सार्वाया अमापद्यते । धिया१ऽ२इ-अर्णा१या—ऽ२ः-नाऽ२ः- ई१२रसाऽ२३इ ( ११.२.१६ ) [4]सार्वाया इति ? धियाऋ१२णयाऽ२१नाऽ२३ई२ ( ११.२.१७ ) ऋणि सार्वायाः ॥ ७ ॥

## ११११५. हु महान् ॥ ८ ॥

[5]हुशब्दोऽमापद्यते । महालिङ्गायामृचि । इन्द्राऽ३२होइ-१हवे१२ऽ३होइ१ ( १०.१.२५ ) स्तुधौ२नऽ३होऽ२३-२हवाऽ५४त्रिणाइ ( ५.१.१४ ) महान्लिङ्गायाम् ? शम्नः ( ३३ ) प्रधन्वायाम् ( ५६७ ) हु महान् ॥ ८ ॥

॥ इत्थंभावः ॥

## ११११६. [6]थोऽण् ॥ ९ ॥

चतुरक्षरस्य पर्वणोऽक्षरमो[7] भवति । इस्थस्तोभे दकारे चेत्यधिकारः । आ१श्वो२दा ( ४.२.२३ ) आश्वो१२ई२नऽ३या२ ( ४.२.२१ ) यास्सो१दा२ ( ४.२.

1. इकारः क. ख. ग. ङ.
2. साशब्दः ग.
3. ऋणिशब्दः क. न
4. सर्वाया इति घ.
5. इत आरभ्य रेऽन्ताक्षरं पर्यन्तं ( १०.३.९ ) घ. न.
6 घोऽण् क. ख. ङ.
7. सर्वेषु कोशेषु "अक्षरः" इत्येव पाठः

२३ ) यास्सोई॒ऽ३या ( ४.२.२१ ) मूर्धानम् ( ६७ ) त्वमिन्द्रबला ( १२० ) तिस्रोवाचः ( ५२५ ) अयापवा[1] ( ५४१ ) इमानुकम् ( ४५२,- आ. ३.१.२२,२३ ) इमाउवाम् ( ३०४ आ. ४.१.१५,१६ ) द्रिवइ- होऽ३इ॒ऽ१ ( १०.१.४ ) चतुरक्षरस्येति ? येषामिन्द्रः ( १३३ ) विश्वं- सम ( स्तोमः ) स्तोम इति ? मानइन्द्रा ( ७.१.२६ ) द्योऽण् ॥ ९ ॥

## ११९७. [2]विस्त्र रुहु ॥ १० ॥

विस्वरिणः पर्वणः द्वैधं [3]रुहूचति साम्नि ओ भवति । पयसि ( आ. ३.१.८ ) निधूचानि । [4]स्वादिद्वितीये ( १२.२.१५ ) प्रवई॒ऽ३या ( ४.२.२१ ) इदामीऽ२३४दाम् ( ४.१.३० ) त्वमूषु ( ३३२ ) यंवृत्रेषु ( ३३७ ) अपघ्नन् ( ५१० ) कण्ठ्य इत्यधिकारः । विस्व रुहु ॥ १० ॥

॥ इति प्रथमो दशकः ॥

---

## ११९८. गि ॥ १ ॥

प्रथमर्थां भवति । इन्द्रोई॒ऽ३या ( ४.२.२१ ) गि ॥ १ ॥

## ११९९. खु सक् ॥ २ ॥

द्वयक्षराभ्यामस्यां भवति । स्ये-असाविदे ( ३१३ आ. ३.१.३० )

---

1. अयापरे ग.
2. विश्वरुहू ग.
3. रुहूवति क. ख.
4. द्वादि क. सादि द्वितीये ग.

उदुत्रच्छायाम् (३३०; आ ४ २ १०) द्व्यक्षराभ्यासस्य । अर्कवृतीयोपान्त्ये (आ १.२ १४) प्रसोमदे (५१४; आ २ २ १६)[1]हि नेत्यधिकार । सु सक् ॥२॥

## ११२०. ह्ये ॥ ३ ॥

हिशब्दश्चाकारे ओ भवति । एवाहोऽ३असि० ( ६ १ २५ ) त्वऽहोऽ३अङ्ग० ( १७ २ ३० ) अकार इति । अपस्नीहि ( ३२३ ) ह्ये ॥ ३ ॥

## ११२१ ए ॥ ४ ॥

एकारयुक्तश्च हिंशब्द ओ भवति । ऐहोइमाऽ२३स्या ( ४ २ ३२ ) ऐहोइ महाहस्तीदक्षाऽ२३होइ ( ५ १ १८,१९ ) गनिष्टये ( २४० ) त्वऽह्योहि ( २४० ) ऐऽ२होऽ१आऽ२३इही ( ३ २ ३ ) नशादीनाम् । वयव ( २६१ ) पुष्ये ( आ १ १ ८ ) एकारयुक्त इति । महिरीणायाम् ( १९० ) अहमिद्धि ( १५२ ) सुपमाहिते ( १९१ ) [2]पुरोहित्याम् ( ४८ ) न निस्वर इत्युत्तरार्थम् । ए ॥ ४ ॥

## ११२२ पात् ॥ ५ ॥

पात्परश्च हिशब्द ओ भवति । पाहोइ उत्ता ( १ २ २७ ) पाहोइचाऽ२ताऽ३४ ( १ २ २८ ) पाहिगीभि ( ३६ ) कण्व्य इत्यधिकार ॥ पात् ॥ ५ ॥

---

1 पिन इत्यधिकार क ख    2 पुराजित्याम क ख

